BENARES SANSKRIT SERIES;
A
COLLECTION OF SANSKRIT WORKS
EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE,
UNDER THE SUPERINTENDENCE OF
G. THIBAUT, PH. D.
*Nos. 132 & 138.*

---

श्रीविद्वद्वरमंचनाचार्य्यभट्टविरचिता

# आश्वलायनसूत्रप्रयोगदीपिका।

काव्यतीर्थ-न्यायोपाध्यायपदवीमता
श्रीसोमनाथोपाध्यायेन संशोधिता।

# PRAYOGADÎPIKÂ

of the Âswalâyana Śrauta Sûtra,

BY PANDIT MANCHANÂ CHÂRYA BHATTA,
EDITED BY
SOMANÂTHOPÂDHYÂYA-NYÂYOPÂDHYÂYA AND KÂVYATÎRTHA.

BENARES:
*Published by the Proprietors Messrs. Braj B. Das & Co.*
AND SOLD BY H. D. GUPTA,
*Secretary, Chowkhamba Sanskrit Book Depot.*

---

Printed at the Vidyâ Vilâs Press,
BENARES.
1907.

ॐ श्रीः

# भूमिका।

न नाम न विषयः सहृदयहृदयानां धर्म्म एव पुरुषार्थमूलमिति, यस्य खलु सूक्ष्मस्वरूपमपूर्वपदैकनिर्वचनीयमनुपलभ्य कुण्ठीभवान्ति शतशः सर्व एवैहिकावप्यर्थकामावासादयितुं किं पुनर्दुर्वासनामषीलेपदूषितस्वान्तैरस्पृहणीयां मुक्तिम्। अतस्तस्यैव खलु जिज्ञास्यत्वं प्रतिज्ञाय लोकोत्तरप्रमाणं चोदनां विवेचयितुं द्वादशलक्षणीं पूर्वमीमांसां प्रणिनाय परमकारुणिको भगवान् जैमिनिमहर्षिः, यदीयसुवर्णसूत्रग्रथितन्यायरत्नमालिकाभिरलङ्कृता चोदना लब्धवर्णान्तरङ्गरङ्गेषु नृत्यन्ती प्रतिपदमुदञ्चयति काञ्चन समुल्लासशालीम्। तस्यैव सर्वाङ्गमनुसृत्य निगमकल्पतरोः कलितशाखाभेदप्रभेदप्रपञ्चस्य साम्प्रतिकैः करालकालव्यालक्रमकवलीकृतचेतनैः कृत्स्नशो दुरारोह्यतामवधार्य स्वस्वशाखागतिसमनुकूलानि प्रयोगसूत्राणि जग्रन्थुः करुणापरवशा आश्वलायनादयो महर्षयः। तेषाञ्चाश्वलायनसूत्राणां सङ्क्षेपलब्धजीवितानां सहजतस्तात्पर्यं पर्यवगमयितुमिमाम् **आश्वलायनश्रौतसूत्रप्रयोगदीपिकां** रचयां बभूव श्रीमान् मञ्चन्भट्टः।

तस्य चैतद्ग्रन्थस्य दुर्लभतादोषं निराकरिष्णुभिः श्रीयुतहरिदाससगुप्तमहाशयैः समुत्साहितोऽहं प्रकाशने प्रावर्तिषि। काशिकराजकीयसंस्कृतपाठशालापुस्तकालयाध्यक्षैः श्रीयुतपण्डितविन्ध्येश्वरीप्रसादशर्मभिः सानुग्रहमर्पितं तत्रत्यमेकमेवाऽऽदर्शपुस्तकं नातिशुद्धमुपलभ्य प्रतिबिम्बरचनामात्रप्रवृत्तस्य मे शिक्षणीयबुद्ध्यपराधैर्दूषितोऽप्ययं दोषाकर इव विद्वल्लोचनलोभनीयतामादधात्विति साञ्जलिमुकुलोपहारं श्रीजगदीश्वरमभ्यर्थयते—

| | |
|---|---|
| कार्त्तिक्यां मङ्गले<br>संवत् १९६४<br>श्रीकाशीपुर्याम् | नयपालाभिजनः<br>श्रीसोमनाथशर्म्मा<br>न्यायोपाध्यायः काव्यतीर्थश्च |

ॐश्रीः

श्रीमञ्चनार्यभट्टविरचिता ।

# आश्वलायनसूत्रप्रयोगदीपिका

प्रारभ्यते ।

य एको विविधैर्यज्ञो गीयते विविधाभिधः ॥
तस्मै नमः क्रतुभुजो विष्णवे प्रभविष्णवे ॥ १ ॥
आश्वलायनसूत्रोक्तप्रयोगस्य प्रदीपिका ॥
क्रियते मंचनार्येण वृत्तिकारानुसारतः ॥ २ ॥

अथैतस्य समाम्नायस्य विताने योगापत्तिं वक्ष्यामः ॥ तत्र प्रथममग्न्याधेयस्यैव प्रयोगो वक्तव्यः, इष्टिरूपत्वात् इष्टेश्च विध्यन्तापेक्षितत्वादैष्टिकविध्यन्तस्य च दर्शपूर्णमासयोराम्नातत्वात्तद्व्याख्यानमन्तरेणाधानासंभवादिति दर्शपूर्णमासावेव प्रथमं दर्शयति ॥ अथ दर्शपूर्णमासयोः कर्मणोर्हविःषु बर्हिष्यासादितेषु होता आहूतः प्रागुदगाहवनीयादवस्थाय प्राङ्मुखो भूत्वा प्रयोगाङ्गं यज्ञोपवीतं धृत्वा ततो निष्क्रम्योपविश्य प्राङ्मुखः प्रयोगाङ्गं स्मृतिविधानेनाचमनं कृत्वा दक्षिणेनांसेनाऽऽवृत्य यत्राग्नयो विहृतास्तं देशं प्रविशति ॥ अध्वर्यो देवता आचक्ष्व । तासामानुपूर्व्यमुच्चैरुपांशुता च यजमानप्रवरनक्षत्रनामधेयानि अध्वर्युं पृष्ट्वा अध्वर्युतो देवतादीनवगम्य प्रणीतोत्करावन्तरेण ॥

अथ प्रासङ्गिकमुच्यते । अप्रणीते कर्माणि इध्ममपरेणोत्करं पूर्वेण प्रपद्यते ॥ चात्वालवत्सु कर्मसु चात्वालमपरेणोत्करं पूर्वेण

प्रपद्यते । एतदन्तरालं तीर्थमिति वदन्त्याचार्याः । एतेन यो यो विहारं प्रपद्यते होता वान्यो वा तस्य या विहिताश्चेष्टास्ता नियमेन प्राञ्चो भवन्ति तस्याङ्कधारणा च नित्या भवति । तस्य यज्ञोपवीतशौचे नित्ये भवतः । तस्य विहारदेशादव्यावृत्तिश्च भवति । तत्र चेत्कर्म वर्त्तते । यत्रैकजातीयाङ्गवचनं भवति । यथा प्रपदेन बर्हिराक्रम्येति । तथा चाङ्गुल्यग्राण्यवकृष्येति । तत्र दक्षिणमङ्गं जानीयात् । अनादेशे च । एतदुक्तं भवति । यत्राङ्गस्यादेशो नास्ति कर्म चोद्यते । यथैन्द्रवायवमुत्तरेर्द्धे गृहीत्वेति । तत्रापि दक्षिणाङ्गमेव जानीयात् । कर्त्रनादेशे होतारं कर्तारं प्रतीयात् । तत्र संशयः । किमेषा परिभाषा होतारं प्रापयति, उत नियमयतीति । तत्राद्यपक्षे अरण्याहरणपिण्डपितृयज्ञसमारम्भणादिषु होतुः कर्तृत्वं प्राप्नोति । तन्नेष्यते । अतो अनेककर्तृप्रसङ्गे कर्तृविशेषणनादिष्टं तत्र होतारं प्रतीयादिति नियामकमेतत्सूत्रं ग्राह्यम् । कर्त्रनादेशे ददातीति कर्मचोदनायां यजमानं कर्तारं प्रतीयात् ॥ तत्र संशयः । किं ददातिशब्दो विवक्षितस्तदर्थो वेति । तत्र ददातिशब्दविवक्षापक्षे चतुःशरावमोदनं ब्राह्मणान्भोजयेदित्यादौ यजमानस्य कर्तृत्वं न प्राप्नोति । इष्यते च ॥ तस्माद् द्रव्योद्देशेन स्वसत्तानिवृत्तिपदार्थचोदनायां यजमानं प्रतीयादिति सूत्रार्थः । कर्त्रनादेशे प्रायश्चित्तेऽधिकृते जुहोति जपतीति कर्मचोदनायां ब्रह्माणं कर्तारं प्रतीयात् । पादे गृहीते ऋचं प्रतीयात् सूक्तादौ हीने पादे गृहीते सूक्तं प्रतीयात् । सूक्तादावसूक्तादावप्यधिके पादे गृहीते तृचं प्रतीयात् । जपः अनुमन्त्रणमाप्यायनमुपस्थानमेतान्युपांशु भवन्ति । बहुविषयाद्विधेरल्पविषयो विधिर्बलीयान्भवति । इति प्रासङ्गिकम् । अग्रेणाहवनीयं दक्षिणेनोत्तरेण पादेन गत्वा उत्तरे वेदिश्रोण्याः पादं समं निधाय प्रपदेन बर्हिराक्रम्य विरलाङ्गुलिकौ पाणी धारयन्

-हृदयसंमितावङ्कसंमितौ वा कृत्वा द्यावापृथिव्याः सन्धिमीक्षमाणः स्थित्वा "अग्नयेसमिध्यमानायानुब्रूही"ति श्रुत्वा "नमः प्रवक्त्र" इत्यादिकं मन्त्रं "तदग्यवाच" इत्येतामृचं जपति । जपानुमन्त्रणाप्यायनोपस्थानकर्मकरणमन्त्राः सर्वाश्चोपांशु प्रयोक्तव्याः । करणवदशब्दममनःप्रयोग उपांशु इत्युक्तत्वात् । "नमः प्रवक्त्र" इत्यादयश्च जपादयो वेदितव्याः । अनेन मन्त्रेणेदं कुर्यादित्येवं विधीयमानाः करणाः । प्रपद्येहमेकमामित्यवसाय स्वं नामादिशेत् । शिवशर्माणमित्यादि । भूतेभविष्यतीत्यादिवाचो अशान्ति वहेति । अङ्गुल्यग्राण्यनक्तृष्य "जातवेदो रमया पशून्मयी"ति प्रतिसन्दध्यात् । "त्वमेम" इत्यादि "तदग्यवाच" इत्यृचं समाप्य अभिहिंकृत्य -सामिधेनीरन्वाह । हिमित्युच्चैः स्वरेण हिंकृत्य "भूर्भुवस्वरो" मिति जपति । अस्याभिहिंकार इति संज्ञा । कौत्सस्तु भूर्भुवस्वरित्येवाह । अभिहिंकारपूर्वजपं न जपति ॥

अथ सामिधेन्यः ॥ "प्रवोवाजाअभिद्यव" इत्येका, "अग्नआयाहिवीतय" इति तिस्रः "ईळेन्योनमस्य" इति तिस्रः "अग्निंदूतंवृणीमह इत्येका, "समिध्यमानोअध्वर" इत्येका, "समिद्धोअग्नआहुत" ति द्वे इत्येकादश । आद्योत्तमयोस्त्रिरभ्यासात्पञ्चदश भवन्ति । आद्योत्तमे अध्यर्धकारं ब्रूयात् । तद्यथा । "प्रवोवाजाअभिद्यवो हविष्मतो घृताच्यादेवां जिगाति सुम्नयो३ प्रवोवाजाअभिद्यवो घृताच्या देवान् जिगातिसुम्नयो३ प्रवोवाजाअभिद्यवो हविष्मन्तोघृताच्या देवाञ्जिगाति सुम्नयो ३ मग्न आयाहिवीतयेगृणानोहव्यदातये निहोतासत्सिबर्हिषि" इत्यादि । एवमुत्तमायाम् । एता ऋचः एकश्रुतिसन्ततमनुब्रूयात् । उदात्तानुदात्तस्वरितानां परः सन्निकर्ष ऐकश्रुत्यं स्वरादिमृगन्तमोङ्कारं त्रिमात्रं मकारान्तं कृत्वोत्तरस्या अर्द्धर्चेऽवस्येत्तत्सन्ततं तस्यान्ताप-

त्तिस्पर्शेषु स्ववर्ग्यमुत्तममन्तस्थासु तां तामनुनासिकां रेफोष्मस्वनुस्वारम् । एवं शस्त्रादिषु ब्रूयात् । अध्वर्यधकारवर्जम् । सामिधेनीमामुत्तमेन प्रणवेनाग्नेमहां असीतिनिगदशेषमुपसन्तत्य ब्राह्मणभारतेतिनिगदेवसाय यजमानस्यार्षेयान्प्रवृणीते । आङ्गिरसबार्हस्पत्यभारद्वाजोतिदेवेद्धोमन्विद्ध इति निगदशेषं ब्रूयात् । इव्यंत्रानित्यवसानम् । आवहदेवान्यजमानायेति अवसाय । देवता आवाहयति । द्वितीयया विभक्त्या देवतानामादिश्य आकारं प्लुतं कुर्वन्नावहेत्यावाहयति । प्रथमदेवताया अग्न आवहेति विशेषः । अथ देवताक्रम उच्यते । अग्निः सोमश्चाज्यभागदेवते । उभयत्र । अग्निमग्नीषोमौ प्रधानदेवते । अनयोर्मध्ये प्रजापतिर्वा विष्णुर्वा उपांशुयागः कर्त्तव्यः । इन्द्रो वैमृधोऽप्यनुनिर्वाप्यः इति पौर्णमास्यामसन्नतस्त्वग्नीषोमीयं तानि अमावास्यायां तु अग्निमिन्द्राग्नी प्रधानदेवते असन्नयतः । संनयतस्त्विन्द्राग्न्योः स्थाने इन्द्रमहेन्द्रयोरन्यतरः । एवं प्रधानदेवता आवाह्य " देवां आज्यपां आवहे " ति प्रयाजानुयाजदेवताऽऽवाहनम् । " अग्निहोत्रायावहसंमहिमहिमानमावहे " ति स्विष्टकृदावाहनम् । " आवहजातवेदः सुयजायजे " ति निगदशेषमुक्त्वा तत्रैवोर्ध्वजानुरुपविशेत् । उदग्वेदे व्यूह्य तृणानि भूमौ प्रादेशं कुर्यात् " अदितिर्माते " ति मन्त्रेण । "आश्रावयज्ञ" मिति मन्त्रेणाश्रावयिष्यन्नध्वर्युमनुमन्त्रयेत् । "देवसवित " रितिमन्त्रेण प्रवृणानमध्वर्युमनुमन्त्रयेत् । मानुष इत्यध्वर्योः श्रुत्वोदाग्नुषे पर्युत्तिष्ठेत् । उत्थाय "षष्ठिश्चाध्वर्य " इति मन्त्रमुक्त्वा " ऋतस्यपंथा " मित्यभिक्रम्य " इन्द्रमन्वारभामह " इति पार्श्वस्थपाणिभ्यामध्वर्युमाग्नीध्रं चांसयोरभिमृश्य "संमार्गोसी " तिमन्त्रेण संमार्गस्तृणैस्त्रिरभ्यात्मं मुखं संमृजीत । सकृन्मन्त्रेण द्विस्तूष्णीं स्पृष्ट्वोदकं होतृषदनस्य पश्चादवस्थायो ।

"अहेदैधिषव्ये" तिहोतृषदनमभिमन्त्र्य । अङ्गुष्ठोपकनिष्ठिकाभ्यां होतृषदनात्तृणं गृहीत्वा प्रत्यग्दक्षिणायान्दिशि निरस्येत् । "निरस्तः परावसु" रिति । स्पृष्टोदकम् "इदमहमर्वावसोः सदने सीदामी"ति दक्षिणोत्तरिणोपस्थेन वामोरूपरि दक्षिणे पादे संस्थापिते सति उपस्थो भवति एतादृशेनोपस्थेनोपविश्य "देवं बर्हि" रिति जपति । "अभिहिषहोतरि"ति जानुशिरसा बर्हिरुपस्पृश्य "भूपतय" इत्यादिकं मन्त्रशेषं जपेत् । अथ प्रदीप्त इध्मे "अग्निर्होते"त्यनेन निगदेन स्रुचावदापयेत् । "योअग्नि"मित्यवसाय "होतारमद्यथा" इति जपित्वा "घृतवतीमध्वर्यो" इतिशेषं ब्रूयात् । अथ पंचप्रयाजा भवन्ति । सर्वत्रानूयाजवर्जितानां याज्यानामागूर्भवति । अंते वषट्कारोनुयाजसहितानाम् । येयजावह इति आगूः । वौषडितिवषट्कारः । तयोरादिस्वरयोर्याज्यान्ते प्लुतिः कार्या । याज्यांते वर्तमानानां सन्ध्यक्षराणामकारं विविच्य प्लावयेत् । प्रगृह्याणि चेत्स्वरूपेणैव प्लुतिः ॥ आगूर्वषट्कारौ याज्यायाः सन्ततौ वक्तव्यौ । याज्याया उच्चैस्तरां वषट्कारः कर्त्तव्यः व्यञ्जनांतो वा । न चेद्याज्यांतः । यथा ज्येष्ठश्चमंत्रोविसर्पणा ३ इवौ० । एकारस्योदाहरणम् । इन्दुंसमह्यन्पतियेममस्मा ३ वौ० । ओकारस्योदाहरणम् । कविमिपक्षसिप्रयज्या ३ उवौ० । ओकारस्य । सहस्रस्तुविभृथः सहद्रा-३ उवौ० । विसर्जनायोऽवर्णवर्जस्वरोपधो रेफमापद्यते । यथा प्रनोनव्येभिस्तिरतंदे ष्टये ३ वौ० । अवर्णोपधोपि विसर्जनीयो रिफ्यते यदि स रेफप्रकृतिको भवेत् । यथा सरस्वतितमिहधातवेका ३ वौं० । यदि अवर्णोपध एव रेफप्रकृतिको विसर्जनीयो न चेत्तथासति लुप्यते । यथा युक्तग्रावाजायतेदेवकामा ३ इवौ० । ति वर्गप्रथमस्तु स्ववर्गतृतीयमापद्यते । यथा सवेदयज्ञमानुषा-

३ ग्नौ० । मकाराकारे याज्यांते यात्प्रयुक्तं अन्तस्थामनुनासिकामापद्यते इति । यथा जिव्हामग्नेचकृषेहव्यवाहां ३ वौ इति । ये ३ यजामहे समिधोअग्नआज्यस्यवेतु ३ वौषट् । एवं सर्वत्र द्रष्टव्यम् । "वागोज" इति सर्वत्र वषट्कारमनुमन्त्रणम् । वसिष्ठशुनकात्रिवध्र्यश्वराजन्यव्यतिरिक्तानां "तनूनपादग्नआज्यस्य व्येत्वि" ति द्वितीयं। वसिष्ठानां तु "नराशंसोअग्नआज्यस्य वेत्विति" द्वितीयः । "इडोअग्नआज्यस्यव्यंन्त्वि" ति तृतीयः । "बर्हिरग्नआज्यस्यवेत्वि" ति चतुर्थः । आगूर्य "स्वाहाग्निस्वाहा सोमंस्वाहाग्निस्वाहा प्रजापतिंस्वाहा विष्णुस्वाहा उपांशुस्वाहा अग्नीषोमौस्वाहेन्द्रवैमृधंस्वाहा देवाआज्यपाजुषाणा" इत्यादिपौर्णमास्यामावास्यां सर्वत्रोपांशुसम्बन्धीनि "अवहस्वाहायाद्रियाधामानीदंहविर्महोज्याय" इत्येतेषां पदानां तन्त्रस्वर एवं तन्त्रस्वराण्युपांशोरुच्चानीति वचनात् । "स्वाहाग्निस्वाहा सोमस्वाहाग्निस्वाहा प्रजापति विष्णुवाडुपांशुस्वाहेंद्राग्नीस्वाहा देवा" इत्याद्यसंन्नयतः अमावास्यायाम् । सन्नयतस्तु इन्द्रमहेन्द्रयोरन्यतरः । एव मन्यत्रापि पञ्चमे प्रयाजे । आवाहनक्रमेण स्वाहाकारयुक्तां देवतां द्वितीयया विभक्त्यानुद्रुत्य यजेत् । सामिधेनीप्रभृतिपंचमप्रयाजपर्यन्तं मध्यस्वरेण । आज्यभागौ प्रधानस्वरेण। प्रधानहवींषि मध्यमस्वरेण । स्विष्टकृन्मध्यमेनोत्तमेन वा । इडादिशंयुवाकान्तमुत्तमेन । शंयुवाकादूर्ध्वमासमाप्तेर्मन्द्रस्वरेण । एवं तन्त्रस्वरः ॥ अथाज्यभागौ । "अग्निर्वृत्राणिजंघनत्वंसोममासिसत्पति" रित्यनुवाक्ये । पौर्णमास्यां वार्त्रघ्नौ । "अग्निः प्रत्नेनमन्मनासोमगीर्भिष्ट्वावय" मिति वृधन्वन्तावमावास्यायाम् । "जुषाणोअग्निराज्यस्यवेत्वि" तियाज्याग्नेः । "जुषाणः सोमआज्यस्यहविषोवेत्वि" ति सोमस्य । आगूर्य द्वितीयया विभक्त्या देवतामादिश्य या-

ज्यां संश्राव्य यजतः। यथा "ये ३ हेग्नि जुषाणोआग्निराज्यस्यवेतूवौ-षट्ये ३ यजामहे सोमजुषाणः सोमआज्यस्यहविषोवेतु वौ" ०इति। एवं सर्वत्रयाज्यासु द्रष्टव्यम्। अनुवाक्यारहितानां सम्प्रैषाणामन्वा-याज्यानामेतस्मिन्नेवासने वैश्वानरीयस्य यजतीति यः वैश्वानरीये-ष्टिः पत्नीसंयाजैश्चरित्वावभृथं व्रजंतीत्यत्र ये पत्नीसंयाजाः एत-न्मध्यवर्त्तिसौमिकीनां चादेशो न कर्तव्यः। आदेशप्रभृत्येतदन्तं वाग्यमनम्। इत ऊर्ध्वमपि याज्यानुवाक्ये अंतरा च प्रमादाद्वा-ग्यमनभङ्गे "इदंविष्णु" रित्यृचं "अतोदेवा" इति वा जपेत्॥

अथ प्रधानयागः। "अग्निर्मूर्द्धा, भुवोयज्ञस्ये" त्यग्नेर्याज्या-नुवाक्ये। "प्रजापतेनत्वदेतान्यन्यङ्कतवेमेलोकाः प्रदिशोदिशश्च"-ति प्रजापतेः। विष्णुश्चेत् "इदंविष्णुर्विचक्रमेत्रिदेवः पृथिवीमे-षएत" मिति विष्णोः। उपांशुनामागूःप्रणववषट्कारा उच्चैर्भवं-ति प्राणसंततश्च याज्यानुवाक्याभ्याम्। "अग्नीषोमासवेदसायु-वमेतानिदिविरोचनानी" त्यग्नीषोमयोः। "विनइन्द्रमृधोजहि मृगो-नभीमः कुचरोगिरिष्ठा" इतीन्द्रस्य वैमृधस्य इति पौर्णमास्याम्। अथामावास्याम्। "इन्द्राग्नीअवसागतंगीर्भिर्विप्रः प्रमतिमिच्छमा-नइंद्राग्न्योः ऐन्द्रसानसिंरयिंप्रससाहिषेपुरुहूतशत्रू"नितीन्द्रस्य। "म-होंइन्द्रोयओजसाभुवस्त्वमिन्द्रब्रह्मणामहानि"तिमहेन्द्रस्य। इत्यमाया-म्। यद्यग्नीषोमीय उपांशुयाजः। " अग्नीषोमायो अग्रवामा-त्युन्दिवोमामातीरश्वाजभारे"ति याज्यानुवाक्ये। अथ स्विष्टकृतः। "पिप्रीहिदेवानि" ति अनुवाक्या। " ये ३ यजामहेग्निस्विष्टकृ-तमयाडग्निरग्नेः प्रियाधामान्ययाट्सोमस्य प्रियाधामान्ययाडग्नेः प्रियाधामान्ययाट्प्रजापतेः प्रियाधामान्ययाट् विष्णोः उपांशुप्रिया-धामान्ययाडग्नीषोमयोः प्रियाधामान्ययाडिन्द्रस्य वैमृधस्य प्रि-याधामान्ययाड्देवानामाज्यपानां प्रियाधामानी" त्यादि " जुषतां

हविरग्नेयद्ग्रविशो अध्वरस्ये" त्यनवानं यजतिप्रकृत्या वा ।
इति पौर्णमास्याम् । अमावास्यायां तु "य ३ येयजामहेऽग्निस्विष्ट-
कृतमयाडग्निरग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाड-
ग्नेः प्रियाधामान्ययाड्विष्णोः प्रियाधामान्ययाडिन्द्राग्न्योः प्रि-
याधामान्ययाड्देवानामाज्यपाना" मित्यादि पूर्ववत् । संनयतस्तु
इन्द्राग्न्योः स्थाने इन्द्रमहेन्द्रयोरन्यतरः । एवमन्यत्रापि । "ये हेग्नि-
स्विष्टकृतमयाडग्निरग्नेः प्रियाडि" त्युक्त्वा आवाहनक्रमेणैव ष-
ष्ठ्या विभक्त्या देवता अनुद्रुत्य प्रियाधामान्ययाट्शब्देनोपसन्तत्य
देवानामाज्यपानामित्यादि । प्रदेशिन्याः पर्वणी उत्तमे द्वे अध्व-
र्युणा अञ्जयित्वा, वाचस्पतिनेत्युत्तरपर्वलेपमुत्तरोष्ठेभ्यात्मं नि-
मार्ष्टि । मनसस्पतिनेत्यधरपर्वलेपमधरोष्ठे निमार्ष्टि । स्पृष्ट्वोदकम् ।
अञ्जलिनेडां प्रतिगृह्य सव्ये पाणौ निधाय इडायाः पश्चाद्दक्षिण-
पाणिमुत्तानाङ्गुलिं निधाय अङ्गुल्यङ्गुष्ठयोर्मध्येनाऽवान्तरेडाम-
ध्वर्युणाऽवदापयीत । तासु ततः पुनस्तेनैव मार्गेण द्वितीयं स्वयमा-
दाय अङ्गुष्ठेनोपसंगृह्य परिगृह्याङ्गुलीः मुष्टिं कृत्वा अवान्तरे-
डासहितेन दक्षिणेन पाणिना दक्षिणत इडां परिगृह्य आस्य-
संमितां नाभिकासमितां वा धारयन्नुपह्वयते । इडोपहूतेत्यादि त-
स्मिन्नुपहूत इत्यन्तम् । तत्र इडाप्टीष्टहूयतामित्यन्तमुपांशु । शेषमु-
च्चैरुपहूय तीर्थेन निष्क्रम्य इडेभागमित्यवान्तरेडां प्राश्य तूष्णी-
मिडाप्राशनं कृत्वाचम्य तीर्थेन प्रविश्य वेदिपरिस्तरणैरञ्जलिमव-
धाय केनचित्सहकारिणा अप आसेचयित्वा मार्जयेत् । "पृथिवी-
भागोसी"ति चतुर्धाकरणभक्षणम् । ततः "कइदंकस्माऽदा"इत्य-
न्वाहार्याभिमर्शनम् । क इदं कस्माअदा इत्यस्य सोमप्रकरणेभिधा-
नात् । प्राक्सोमात्तूष्णीमिति केचित् । अथानुयाजास्त्रय एकैकं
प्रेषितो यजति । नात्रागूः । देवंबर्हिः १. देवोनराशंसः २. देवो

अग्निः ३। स्विष्टकृदनवानं यजतिप्रकृत्या वा।प्रकृति पक्षेअमत्सते-त्यत्रसानम्। प्रेषितः सूक्तवाकं ब्रूयात्। इदं द्यावापृथिवी इत्यादि नमोदेवेभ्य इत्यन्तम्। तयोराविदीत्यवसाय आवाहनक्रमेणैव प्रथमया विभक्त्यां देवतामादिश्य "इदं हविरजुषतावीवृधतमहोज्यायोक्रते"त्युपमंतनुयात्। द्विदेवत्ये "इदं हविरजुषेतामवीवृधेतां महोज्यायोक्रातां"बहुदैवत्ये "हविरजुषन्तामवीवृधन्तमहोज्यायोक्रते"त्यूहः। "अग्निरिदं हविः सोम इदं हविः। अग्निरिदं हविः। प्रजापतिः। विष्णुः। उपांशु। इदं हविरित्युच्चैः। "अग्नीषोमाविदं० जुषे० धेतां० क्रातां०। इन्द्रोवैमृध इदं हविः" इति पौर्णमास्याम्। "अग्निरिदं हविः। सोमइदं हविः। अग्निरिदंह-विः। उपांशु पूर्ववत्। इन्द्राग्नीइदं हविः। जुषे० धेतां क्रातां" इत्यमावास्यायामसन्नयतः।सन्नयतस्तु ऐन्द्राग्रस्थाने इन्द्र इदं महेन्द्र-इदं हविरिति वा। देवाआज्यपा इत्यादि यथापठितमेव ब्रूयात्। अयं यजमान इत्यत्रमाय यजमानस्य द्वे नामनी आदिशति। व्यावहारिकं नाक्षत्रं च यज्ञेश्वरशर्मा रौहिणः आयुराशास्त इत्यादि। नाक्षत्रनामग्रहणप्रकार उच्यते। कार्त्तिकः रौहिणः मार्गशीर्ष आर्द्र-कः पुनर्वसुः पुष्यः तिष्य इति वा। आश्लेषः माघः फाल्गुनः। हस्तः चैत्रः स्वातिः विशाखः अनुराधः ज्येष्ठः मूलकः आषाढः श्रवणः श्रावण इति वा। धनिष्ठः शातभिषजः शतभिषगिति वा। प्रोष्ठपदः रैवतः आश्वयुजः अश्वयुगिति वा। अपभरणः। तथा चोक्तं रोरेमृमज्येचिषु वृद्धिरादौष्टान्मेववान्त्यश्रवगश्वयुक्षु। शेषेषु नाम्नोर्कपरः स्वरोन्त्यः स्वाद्योरदीर्घः सविसर्गः इष्ट इति। शंयुवाकाय संप्रेषितस्तच्छंयोरावृणीमह इत्याहानुवाक्यवद्ब्रूयात्प्रणवर-हिताम्। अथाध्वर्युर्वेदं प्रयच्छति तं "वेदोसी"ति मन्त्रेण गृहीत्वा उदायुषेत्येतेनोपोत्थाय गार्हपत्यस्य पश्चादुपविश्य पत्नीसंयाजान्य-

जति । तत्र अध्वर्युप्रत्ययेन देवताक्रमः । सोमः त्वष्टा राका सिनीवाली कुहूर्देवानांपत्नीरग्निर्गृहपतिः । तत्र राकायास्तिस्रः काम्याः । इतरास्तु नित्याः । "आप्यायस्वसमेतुतेसन्तेपयांसिसमुयंत्वाजा" इति सोमस्य । "इहत्वष्टारमग्नियन्तन्नस्तुरीय"मिति त्वष्टुः । "राकामह"मिति द्वे राकायाः । "सिनीवालिपृथुष्टुक" इति द्वे सिनीवाल्याः । "कुहूमह" मिति द्वे कल्पजे कुह्वाः । "देवानां पत्नीरुशतीरदन्तुन"इति द्वे देवानां पत्नीनाम् । "अग्निर्होतागृहपतिर्हव्यवाडाग्नि" रित्यग्नेः गृहपतेः । पूर्ववत्पर्वाञ्जनादि । आज्यं पाणितलेवदापयीत । पूर्ववदिडामुपहूय तूष्णीं प्राश्याचम्य शंयुवाको वदेन्न वा । वेदं पत्नी प्रदाय वाचयति । "वेदोसिवित्तिरसी" त्यादि "कामायत्वे" त्यन्तम् । पत्नी प्रजाकामा चेद्वेदशिरसा नाभिदेशमालभेत । अथ होता पत्न्यां योक्त्रं "प्रत्वामुञ्चामिवरुणस्ये" त्यृचा विमुच्य द्विगुणं कृत्वा गार्हपत्यस्य पश्चात् प्राक्पाशं निधाय तस्योपरिष्टाद्वेदं विस्रस्य उदगग्रं निधाय वेदेन संश्लिष्टं प्रोक्षणीपात्रं पुरो निधायाद्भिः पूरयित्वा स्वयं पत्नीं चाभिमृश्य पत्नीं वाचयति पूर्णममीत्यादि । अथ पूर्णपात्रात्प्रतिदिशमुदकमुदुक्षन्स्वयमुदुक्षतीं पत्नीं वाचयति । "प्राच्यां दिशि देवा" इत्यादि । अथ पत्न्या उत्तानमञ्जलिमात्मनश्च सव्यमुत्तानं हस्तं योक्त्रस्याधस्तान्निधायाभ्यात्मं पूर्णपात्रं निनयन्वाचयेत् "माहंप्रजा"मिति । पत्नीद्वित्वे बहुत्वे वा सर्वासां योक्त्राणि क्रमेण विमुच्य सर्वाणि ग्रहैव द्विगुणीकृत्य योक्त्रविमोचने मन्त्रावृत्तिः । पूर्णपात्राभिमर्शनवाचनोदुक्षणनिनयनानि सर्वासां युपगद्भवन्ति । अथ दक्षिणपाणिना वेदतृणान्यग्रे गृहीत्वा अविधुन्वन् "तन्तुंतन्व" न्नित्यनेन सव्येन पाणिना वेदतृणानि सन्ततं स्तृणन् गार्हपत्यादाहवनीयं गच्छेत् । शेषमन्तर्वेदि निधाय प्रत्यगद्-

गार्हपत्यादवस्थाय स्थाल्याः स्रुवेणाज्यमादाय सर्वप्रायश्चित्तानि जुहोति । अयाश्चेत्येका कल्पजा । प्रथमस्याग्निरयस्मैदेवता "अतोदेवा" इति द्वे । द्वितीयस्या देवा देवता । तृतीयस्या विष्णुर्देवता । भूः स्वाहा । भुवः स्वाहा । स्वः स्वाहा । भूर्भुवः स्वाहा । एवं सप्ताहुतीः । व्याहृतीनां व्यस्तसमस्तानां क्रमेणाग्निवायुसूर्यप्रजापतयो देवताः । इति हुत्वा । "ॐचमेस्वरश्चमे" इति संस्थाजपेनोपस्थाय तीर्थेन निष्क्रमेत् । एतावद्दर्शपूर्णमासयोर्होतृकर्म ॥

अथ ब्रह्मण इत्यादि । ब्रह्मा कर्माङ्गाचमनं कृत्वा होतृवत्तीर्थेन विहारं प्रपद्य समस्तपाण्यङ्गुष्ठाग्रेणाहवनीयं परीत्य आहवनीयस्य दक्षिणतो ब्रह्मासनं भवति तस्य दक्षिणत उदङ्मुखो ब्रह्मासनात्तृणं निरस्याहवनीयमभिमुखो होतृवदुपविशति । उपविश्य जपति "ब्रहस्पतिर्ब्रह्मे" ति । अथाध्वर्युराह "ब्रह्मन्नपः प्रणेष्यामी" ति । श्रुत्वा ब्रह्मा "भूर्भुवस्वः बृहस्पतिप्रसूत" इति जपित्वा "ॐप्रणये" त्यतिसृजेत् । प्रणवाद्युच्चैरूर्ध्वं वा प्रणवात् । अत ऊर्ध्वं वाग्यत आस्ते आहाविष्कृत उद्वासनात् । अन्यत्र होतृवद्वाग्यमनम् । "ब्रह्मन् प्रोक्षिष्यामी" ति श्रुत्वा "भूर्भुवस्वरि" त्येवमादि जपित्वा "ॐप्रोक्ष" त्यतिसृजेत् । "परिगृहीष्यामी" ति श्रुत्वा "परिगृहाणे" त्यतिसृजेत् । "ब्रह्मन्निध्मंप्रोक्षिष्यामी" ति श्रुत्वा भूरित्येवमादि जपित्वा "ॐप्रोक्ष" त्यतिसृजेत् । बर्हिः प्रोक्षणे एवमेव । "ब्रह्मन्प्रवरायाश्रावयिष्यामी" ति श्रुत्वा भूरित्यादिजपित्वा "ॐमाश्रावये" त्यतिसृजेत् । अथ प्राशित्रमानीयमानमीक्षते " मित्रस्यत्वे" त्यनेन । प्राशित्रमञ्जलिना प्रतिगृह्णामीति देवस्यत्वेत्यनेन पृथिव्यास्त्वेत्यनेन कुशेषु प्राग्दण्डं प्राशित्रहरणं निदधाति । अंगुष्ठोपकनिष्ठिकाभ्यां गृहीत्वा "निष्क्रम्याग्नेष्टास्येन प्राश्नामी" त्यनेन प्राश्नाति दन्तैरभिन्दन् । आचम्योदकं

भक्षयेत्सत्येनेत्यनेन पुनराचम्य इन्द्रस्यत्वेत्यनेन नाभिमालभेत । प्रविश्य विहारं प्रक्षाल्य प्राशित्रहरणं त्रिरनेनाभ्यात्ममथो निनयेत । इडां भक्षयित्वा होतृवन्मार्जयित्वास्मिन् ब्रह्मभागं निदध्यात । पश्चात्कुशेषु यजमानभागं निदध्यात । अन्वाहार्यमवेक्षेत । "प्रजापतेर्भागं" इत्यनेन । अन्वाहार्यादङ्गुष्ठोपकनिष्ठिकाभ्यां गृहीत्वा प्राणापानावित्यनेनास्पृशन्नवघ्राय अथ दक्षिणाग्रहणं होतृवत्कृत्वा स्वकीयभागं गृहीत्वा ब्रह्मभागं निदध्यात । शिष्टं ब्रह्मन्प्रणेस्याम इति श्रुत्वा "ब्रहस्पतिर्ब्रह्माब्रह्मसदन आशिष्ठे" त्येवमादि जपित्वा "ॐप्रतिष्ठ" त्यतिसृजेत् । संस्थिते कर्मणि ऋत्विजां जघन्यसर्वप्रायश्चित्तानि जुहुयात । "अयाश्चाग्न" इत्येवमादिभिर्मन्त्रैः होतृवत । अथ संस्थाजपः । तीर्थेन निष्क्रम्यानियमः ॥

इत्याश्वलायनसूत्रप्रयोगदीपिकायां मञ्चनार्यभट्टविरचितायां प्रथमोऽध्यायः ॥

अथ पावमानेष्ट्यादयो द्वितीयाध्याये समाम्नाता इष्टयो वक्ष्यन्ते । तासां दर्शपूर्णमासिकमेव तन्त्रम् । दर्शपूर्णमासाविष्टीनां प्रकृतिरिति वचनात । आज्यभागौ तु सर्वत्र वार्त्रघ्नावेव । एतदभिप्रायेण पौर्णमासेनेष्टिपशुसोमा उपदिष्टा इत्युक्तमाचार्येण । तस्यायमर्थः । पौर्णमासेन कर्मणा इष्ट्यादयो व्याख्याताः न दर्शेन । एतदत्र फलति । वार्त्रघ्नावाज्यभागौ भवतो न वृधन्वन्ताविति । यत्तु जैमिनिना सानाय्यं तावत्-द्रव्यत्वादित्यत्र पशोः सान्नाय्यविकारत्वमुक्तम् । यद्यपि प्रकृतिभावनिर्णये द्रव्यसामान्यं दुर्बलमिति स्थितं तथापि औपमानिकाद्द्रव्यसामान्यात्प्रत्यक्षं देवतासामान्यं बलवदेव । तस्मादग्नीषोमीयपुरोडाशविकारत्वादुपपन्नं वार्त्रघ्नावाज्यभागाविति । इष्टिषु तु यत्र पौर्णमासप्रकृतत्वं न्यायतो

वक्तुमशक्यं तत्राज्यभागयोर्वाचनिकत्वं द्रष्टव्यम्। सोमे अपूर्वेपि पौर्णमासातिदेशं कुर्वतस्तत्र वृत्तिकारस्यायमाशयः। असमाम्नातानामिष्टीनां सोमे प्रयुज्यमानानां पौर्णमासमेव तन्त्रं कार्यं नार्थात्तन्त्रं विकार इति। तैरिष्टिपशुसोमैरमावास्यायामेव यजेत पौर्णमास्यां वा यजेत। न प्रकृतिवत् द्व्यहकालता कार्या। राजन्योऽमावास्यायां पौर्णमास्यां चाग्निहोत्रं जुहुयात्। अमावास्यापौर्णमासीतोऽन्यत्र तपस्विने ब्राह्मणाय होमद्रव्यमग्निहोत्रकाले दद्यात्। यस्तु राजन्यो वाङ्मनसयोर्वाच एव वा यथार्थत्वप्रवर्तनशीलः यो वा सोमयाजी भवति स राजन्यः स तदाग्निहोत्रं जुहुयात्। नाऽमावास्यापौर्णमासयोरेव नियमः। अनेकेष्वर्थेष्वनेकेषामर्थानामुपदेशे सति प्रथमस्य प्रथमो द्वितीयस्य द्वितीय इत्यानन्तर्ययोगो ग्राह्यः। याज्याऽनुवाक्ये एकैकस्य द्वे द्वे कृत्वा आनन्तर्ययोगो ग्राह्यः। अदृष्टादेशे चेद्याज्यानुवाक्ये ततो निरो भवतः। एतदुक्तं भवति। यत्र कर्मणि देवतामुद्दिश्य याज्यानुवाक्ये स्वशास्त्रे नादिष्टे तथाध्वर्युशास्त्रेप्यादेशो न दृश्यते तत्र कर्मणि तस्यै देवतायै येऽस्मच्छास्त्रे प्रसिद्धे ते याज्यानुवाक्ये कर्त्तव्ये॥

अथाग्न्याधेयमुच्यते॥ तच्च कृत्तिकासु रोहिण्यां मृगशिरसि पूर्वोत्तराफाल्गुनीषु विशाखयोरुत्तरयोः प्रोष्ठपदयोः एतेषां सप्तानां नक्षत्राणां मध्ये कस्मिंश्चिदादधीत। ग्रीष्मवर्षाशरत्सु कालेषु क्षत्रियवैश्यरथकारा यथाक्रममादधीरन्। नक्षत्रपर्वणि तु पूर्ववत्। अथ वा यः कश्चिद्यस्मिन्कस्मिंश्चिदेवादधीत। नक्षत्रपर्वणि तु पूर्ववत्। सोमाधानं कर्तुमिच्छन् न ऋतुमीक्षेत न नक्षत्रमीक्षेत। एतदग्न्याधेयमङ्गहीनाश्रोत्रियषण्ढादिशूद्रवर्जमधिकारः। इत्याधानकालः॥ अश्वत्थाच्छमीगर्भादरणी आहरेत्। यजमानः अनपेक्षमाणो यो अश्वत्थशमीगर्भ इति। शमीकोटरजोऽश्वत्थः शमीगर्भो नि-

मन्यते । शम्या संसक्तमूलो वा शमीच्छायां गतो ऽपि वेति हरदत्ते जैमिनिसूत्रेण । अत्र सूत्रे शमीगर्भशब्दे संशयः । किं शम्या गर्भः शमीगर्भः शम्या उपरि यो जात इत्यर्थः । एवं तत्पुरुषो ग्राह्यः । उत्तमशमी गर्भे यस्येति । शमी यस्योपरि जायते इत्यर्थः। एवं बहुव्रीहिर्ग्राह्य इति । तत्र तत्पुरुष एव ग्राह्यो न बहुव्रीहिः । शमीगर्भशब्दस्य अन्तोदात्तस्य वेदे प्रयोगात्। पूर्णाहुत्यन्तमग्न्याधेयं भवति । इष्टयस्तु वैकल्पिक्यः । तत्र यदि अध्वर्युरिष्टिं कुर्यात् तदन्तं तदाग्न्याधेयं भवति । अथ पूर्णाहुत्यन्तमग्न्याधेयम् । के चित्तु पूर्णाहुत्यन्तमग्न्याधेयमग्निहोत्रहोमार्थमिच्छन्ति । नेतरकर्मार्थम् । अन्यथा कर्मार्थे तस्मिन्निष्टयो नित्या भवन्ति। के चित्त्वाग्नेयीमेवेष्टिं नित्यामिच्छन्ति । अन्या अनित्याः । अथ गार्हपत्यागारे अग्न्याधेये क्रियमाणे ब्रह्मणः स्थानासनयोर्विकल्पः । तथाऽरण्योः प्रदानकाले तथा ब्रह्मौदनश्रपणकाले तथा अजबन्धनकाले तथा समिदाधानकाले अथ ब्रह्मौदनप्राशनकाले निरसनोपवेशने कृत्वा ब्रह्मजपं जपति । तत आहवनीयाधानकाले दक्षिणत आहवनीयस्य निरसनोपवेशने कृत्वा ब्रह्मजपं जपित्वास्ते आपूर्णाहुतिहोमात् । चेष्टास्वमन्त्रासु स्थानासनयोर्विकल्पः । सर्वत्र स्थानासनमाकर्मणः परिसमाप्तेः। अथ होता । यदि अध्वर्यव इष्टीस्तनुयुः तत्र आवाहने विशेषः । आज्यभागावावाह्य "अग्निं आवह अग्निं पवमानं आवह देवाः आज्यपा"मि"त्यादि । प्रथमे प्रयाजे। "ये ३ यजामहेस्वाहाग्निं स्वाहा सोमंस्वाहाग्निंपवमानं स्वाहा देवा" इत्यादि । वात्रघ्नावाज्यभागौ । आग्नेयस्याग्निर्मूर्द्धेत्यनुवाक्या याज्यायां विशेषः । " अयमग्निः सहस्रिण " इति याज्या । "अग्नआयूंषिपवसेग्नेपवस्वस्वपा" इत्यग्नेः पवमानस्य । अथ स्विष्टकृतः । "सहव्यवानमर्त्य" इत्यनुवाक्या । "ये ३,० हे

ग्निं स्विष्टकृतमयाडग्निरग्नेः प्रियाधामान्ययाट्सोमस्य प्रियाधामा- न्ययाडग्नेः प्रियाधामान्ययाडग्नेः पवमानस्य प्रियाधामान्ययाड्दे- वानामाज्यपानां प्रिया० जुषतां हविरग्निर्होता पुरोहित" इति याज्या। संयाज्ये इत्युक्तेः स्विष्टकृद्यागसंबन्धिन्यौ याज्यानुवाक्ये प्रतीयात् । सूक्तवाके । "अग्निरिदं हविः सोम इदं हविः अग्नि- रिदं हविः अग्निःपवमान इदं हविः देवा आज्यपे"त्यादि । अभ्य- दवस्थानादिनिष्क्रमणान्तं पौर्णमासेन व्याख्यातम् । अन्यत्रापि सर्वत्र देवतागमे नित्यानामपायो या स्विष्टकृतमन्तराज्यभागौ च तास्तत्स्थाने एष समानजातिधर्मः । तथा देवताया देवतयोर्देव- तानां वा आगमे सर्वासां प्रसिद्धानामपायो भवति । यस्य प्राकृ- तस्य स्थाने वैकृतं तज्जातीयमुपगतं भवति तद्वैकृतं प्राकृतधर्मकं वक्तव्यम् । प्राकृतं त्वपनेतव्यम् । यथा पिञ्यायां सामिधेन्यः ॥

अथ द्वितीयेष्टिः ॥ तस्यामावाहने विशेषः। आज्यभागावावा- ह्य "अग्निंपावकंआ३वहा अग्निंशुचिंआवह देवाः" इत्यादि । पं- चमे प्रयाजे "ये ३ यजामहेस्वाहाग्निंस्वाहा सोमंस्वाहाग्निंपावकं स्वाहाग्निंशुचिंस्वाहादेवा" इत्यादिवृधन्वन्तावाज्यभागौ भवतः । "सनः पावकदीदिवोग्नेपावकरोचिषे" त्यग्नेः पावकस्य याज्यानु- वाक्ये भवतः "अग्निः शुचिव्रततमउदग्नेशुचयस्तवे" त्यग्नेः शुचेः । अथ स्विष्टकृतः "साह्वान्विश्वाअभियुज" इत्यनुवाक्या । "ये ३ ग्निंस्विष्टकृतमयाडग्निरग्नेः प्रि०सोमस्यप्रि०डग्नेः पावकस्यप्रि० डग्नेः शुचेः प्रि० देवानामाज्यपाना" मित्यादि० "जुषतांहविरग्नि- र्होतापुरोहित" मिति याज्या । सूक्तवाके । "अग्नि रिदं हविः सोमइदं अग्निः शुचिरिदं देवा आज्यपे" त्यादि । अन्यद्दर्शेन व्याख्यातम् ॥

अथ तृतीयेष्टिः ॥ तस्यामिष्टौ सामिधेन्यौ प्रक्षिपति । "समि-

ध्यमानो अध्वर" इत्यस्या उपरिष्टात् । उत्तमसमीपा उपोत्तमा तस्याः प्राक् "पृथुयाजा अमर्त्य" इति द्वे आवपति । यत्र यत्र धाय्या इत्युच्यते । तत्र तत्र एते ऋचावेतद्धर्मके वेदितव्ये आवाहने आज्यभागावावाह्य । अग्नीषोमौ इन्द्राग्नी विष्णुरिति त्रीणि देवता भवन्ति । तिसृणां मध्ये एका देवता विकल्पेन भवति । अदितिर्नित्या भवति । "अग्निमग्नआ ३ सोममावह इन्द्राग्नी आवह अदितिं आवह देवां आज्यपा"मित्यादि पञ्चमे प्रयाजे "ये ३ स्वाहाग्निस्वाहा सोमंह स्वाहा इन्द्राग्नीस्वाहा अदितिस्वाहा देवा" इत्यादि । पुष्टिमन्तावाज्यभागौ । "अग्निनारायिमश्नवद्रुयस्फानो अमीवहे" त्याज्यभागयोरनुवाक्ये । याज्ये नित्ये । आद्यानां त्रयाणां दर्शपूर्णमासप्रकरणे उक्ता याज्यानुवाक्याः । तत्राग्नीषोमयोः पौरोडाशिके वेदितव्ये । नोपांशुयाजसंबन्धिन्यौ । "उतत्वामादतेमहीमहीमूषुमातरंसुव्रताना" मित्यृचावदितेर्वेदितव्ये । अथ स्विष्टकृतः । "प्रेद्धोअग्नेदीदिही" त्यनुवाक्या । "ये ३ ग्निं स्विष्टकृतमयाडग्निरग्नेः प्रि० सोमस्यप्रि०इन्द्राग्न्योः प्रि०अदित्या प्रि० देवाना" मित्यादि० । "जुषतांहविरिमोअग्नेवीततमानि" इति याज्या । विराजावित्युक्त एते संयाज्ये प्रत्येतव्ये सर्वत्र सूक्तवाके । "अग्निरिदं०सोमइदं०इदाग्नीइदं०ये०क्रातांआदतिः इदं-देवाआज्यपा" इत्यादि । अन्यत्पौर्णमासवत् । अथ प्रासङ्गिकम् । इति तिस्रः । अस्यायमर्थः । तिस्र इष्टय एवं तन्त्रका भवंति । अन्या अपीष्टयो भवन्ति । तास्त्वन्यथा तन्त्रा भवन्ति । उक्तेष्टित्रयमध्ये यदि देवतान्यत्वं भवति तथापि तत्प्रथमायामाम्नातं तन्त्रं तदेव प्रथमायां भवति । द्वितीयस्यामाम्नातं तन्त्रं तदेव द्वितीयायां भवति । यच्च तृतीयस्यामाम्नातं तदेव तृतीयस्याम् । नान्यथातन्त्रं कार्यम् । इति तिस्र इष्टयः । अथ वा आद्योत्तमे इष्टी भवतः । अथ

वा आद्यां वा इष्टिर्भवति। सा षढविका भवति सर्वदेवतायुक्ता त-थासति तदाज्यभागयुक्तायां प्रथमायां धाय्ये भवतः। विराजौ तु संयाज्ये भवतः। इति मात्रो विकारो यस्यामिष्टौ भवति असावि-ष्टिर्वैराजतन्त्रं विजानीयात्। एवं चाध्वर्युवशाद्यदाऽऽद्यैव क्रियते त-दा द्वितीयंतृतीययोरपि देवतास्त्वस्यामेव यष्टव्याः। तदनुसारेण प्रयोग उच्यते। आवाहने विशेषः। "अग्निमग्नआ० सोमम[redacted]ह अग्निमाव० अग्निंपवमानं० अग्निंपावकं० अग्निंशुचिं०इन्द्राग्नी-आवह अदितिंआ०देवाः"इत्यादि। पञ्चमे प्रयाजे। "ये ३ स्वाहाग्निं० सोमं० ग्निं० अग्निंपवमानं स्वाहाग्निंपावकं० ग्निंशुचिं हेन्द्राग्नी स्वाहा अदितिं आ०देवा" इत्यादि। अग्न्याधेयप्रभृति चा-तुर्मास्यपर्यन्तं या इष्टयस्तासां प्रधानमुपांशुप्रकारः। अग्न्याधेयप्र-भृत्यात उपांशु हविष इति वचनात्। वार्त्रघ्नावाज्यभागौ प्रधानानां याज्यानुवाक्या इष्टित्रये उक्ताः। अथ स्विष्टकृतः। "प्रेद्धोअग्ने" इत्यनुवाक्या। "ये३ ग्निस्विष्टकृतमयाडग्निरग्नेः प्रि०ड्सोमस्याप्रि० डग्नेः प्रि० अग्नेः पवमानस्य प्रि० अग्नेः पावकस्य प्रि० अग्ने शुचेः प्रि०इन्द्राग्न्योः प्रिया०आदित्या प्रिया०देवानामाज्यपा ना" मित्यादि "जुषतां हविरिमा अग्ने" इति याज्या सूक्तवाके "अ ग्निरिदं सोम इदं अग्निरिदं अग्निः पवमानः इदं अग्निः पावकः इदं अग्निः शुचिः इदं इन्द्राग्नी इदं०षे० धेक्रातां अदितिः इदं हविः देवा" इत्यादि। पौर्णमासवत्सर्वं संस्थाजपान्तम्। यदा अग्निः प-वमानः केवलः क्रियते पूर्वकारिवशात् तदा प्रथमायामेव तन्त्रं भ-वति। एवमग्नेरपि केवलस्य। यस्मिन्कालेग्न्याधानं सेष्टिकं समाप्तं भवति तस्मात्कालादारभ्य द्वादशरात्रमजस्रा अग्नयो भवन्ति यं अधिगता श्रीः। तस्य सर्वकालमजस्रा अग्नयो भवन्ति। गतश्रीर्ना-म प्राप्तश्रीरित्यर्थः। इत्यग्न्याधेयं समाप्तम्॥

अथाग्निहोत्रमुच्यते । अग्न्युत्सर्गे कृते नित्यधृतगार्हपत्यं यजमानः प्राक् प्रणयनात्संप्रेष्यत्युद्धराहवनीयमिति स्वयं होमत्वे न संप्रैषो भवति । अथ गार्हपत्यं प्रज्वाल्य दक्षिणाग्निमानयन्ति । वैश्यकुलात् यस्मात्कस्माच्चिद्वित्तवतो वा दक्षिणाग्निमानयेत् । एकयोनयं इत्यन्ये मन्यन्ते । अस्मिन्पक्षे गार्हपत्यादेव दक्षिणाग्नेरुद्धरणं कार्यम् । अथ वा नित्यधृतस्य दक्षिणाग्नेः प्रज्वलनं कार्यम् । अथ वा अरणिमन्थनं कार्यम् । यथोक्तेन विधानेन यत एव दक्षिणाग्नेराहरणमाधाने प्रारब्धं तत एव कर्तव्यमाद्यन्तात् । एवं प्रकारेण दक्षिणाग्निप्रणयनं कृत्वा गार्हपत्यादाहवनीयं ज्वलन्तमादाय पात्रान्तरे कृत्वा अथ "देवन्त्वादेवेभ्य" इति मन्त्रेण पात्रस्थमाहवनीयमुद्यमेत् । अथ " उद्ध्रियमाण उद्धरपाप्मन" इति मन्त्रेणाहवनीयायतने निदधाति सायम् । यथा सायं तथा प्रातरपि गार्हपत्यं प्रज्वाल्येत्यादि सर्वं कार्यम् । विशेषस्तूच्यते । व्युष्टायां प्रज्वलनादि भवति तमाहवनीयमुखे कृत्वा निदध्यादायतनं प्रणयनमन्त्रेण । "अन्हायदेन" इत्यस्य स्थाने "रात्र्यायदेन" इति कृत्वा प्रणयेत् । " अमृताहुतिमि" ति मन्त्रेण आहवनीये निदध्यात् । अतः कालादूर्द्ध्वमजस्रधृताग्निरपि आहिताग्निर्व्रतचारी भवत्याहोमात् । अनुदितहोमी च आ उदयात् व्रतचारी भवति । अत्र व्रतशब्देन यथासंभवं चातुर्मास्यव्रतानि सत्रिधर्माश्च यथासंभवं गृह्यन्ते । अथाग्निहोत्रद्रव्याहरणं करोति । ततोऽस्तमित आदित्ये होमः कार्यः । होतृवत्कर्माङ्गमाचमनं कृत्वा तीर्थेन प्रपद्य एकैकमग्निं सोदकेन पाणिना त्रिः परिसमूहति तूष्णीम् । अथ "ऋतसत्याभ्या" मिति मन्त्रं जपित्वा पर्युक्षेत् । त्रिस्त्रिरेकैकमग्निं पुनः पुनरुदकमादाय । त्रिरेव च मन्त्र अग्निनामानन्तर्ये विकल्पो भवति । अथ वा दक्षिणमेवाग्निं प्रथमं पर्युक्षेत् । न विकल्पेन कुर्या-

त्। एवं ह्यर्थवादे श्रूयते। "अग्नीनां दक्षिणः पिता गार्हपत्यः पुत्रः पौत्र आहवनीयः" तस्मादनेन क्रमेण पर्युक्षेत्। परिसमूहनेऽपि एष एव वेदितव्यो विधिः। अथ गार्हपत्यादविच्छिन्नामुदकधारां हरेत् "तन्तुन्तन्वन् जस" इत्यृचा आहवनीयात्। अयमाकारो मर्यादायां नाभिविधौ। अथ पश्चाद्गार्हपत्यस्योपविश्य अकृत्वा निरसनोपवेशने अथ गार्हपत्या उदगङ्गारामपोहेत्। "सुकृतश्च-कृतस्थे" ति मन्त्रेण। अथ तेष्वङ्गारेष्वपोहितेषु अग्निहोत्रार्थं द्रव्यमधि श्रयेत "अधिश्रितमि"ति मन्त्रेण। "इडायास्पद"मिति वा मन्त्रेण। दधि चेदग्निहोत्रार्थं तन्नाधिश्रयेत्। तदप्यधिश्रयेदित्येके मन्यंते। पयसा नित्यहोमः। नित्यश्चासौ होमश्च नित्यहोमः। पयसा कर्त्तव्यः। तण्डुलादिनाग्निहोत्रहोमो वा। अथाऽकामस्याग्निहोत्रहोमः पयसा तण्डुलादिना कर्तव्य इत्यर्थः। अथ काम्यद्रव्याणि। यवागुरोदनो दधिसर्पिः एतानि द्रव्याणि ग्रामकामान्नाद्यकामेन्द्रियकामतेजस्कामानामाहिताग्नीनां यथासंख्येन भवन्ति। यवाग्वोदनयोः क चित्सिद्धयोरुपादानमिच्छन्ति के चिदत्रैव श्रयणम्। अधिश्रितं यदग्निहोत्रद्रव्यं तदवज्वलयेत्। अनधिश्रयं द्रव्यवज्वलयेत्। "अग्निष्टेतेज" इति मन्त्रेण यदवज्वलितं तत्स्रुवेण प्रतिषिञ्चेत् "शान्तिरसि" मन्त्रेण। न वा प्रतिषिच्यात्। तयोः प्रतिषेचनाप्रतिषेचनयोर्व्यवस्था कार्या। एतदुक्तं भवति। यदा प्रतिषेक आदौ न कृतस्तदा प्रतिषेको न कदा चिदपि भवति। यदा तु प्रतिषेक आदौ कृतस्तदा प्रतिषेको भवति। अथ येन तृणेनाग्निहोत्रमवज्वलयितव्यं तेन तृणेन पुनर्ज्वलता तत्परिहरेत् त्रि"रन्तरितंरक्ष" इति मन्त्रेण द्विस्तूष्णीम्। अथाग्निहोत्रद्रव्यं तापनसमुद्गता अन्ता यस्य तथाभूतं कर्ष "निवादिवे" त्यादिभिस्त्रिभिर्मन्त्रैस्त्रीनिधानानि कुर्वन्नुदगु-

द्रासयेत्। "सुहुतकृतस्यसुहुतमकार्ष्टे" ति मन्त्रेण। अपोहितानं-गारान् इतराङ्गारमध्ये निक्षिपेत्। अथ स्रुक्स्रुवं प्रतपेत्। "प्रत्युष्ट" मित्यादिना। उत्तरतः स्थाल्याः स्रुचमासाद्य "ॐ मुन्नयानी" ति मन्त्रेणातिसर्जयीताहिताग्निं क्षीरहोता। एतदन्तं कर्म क्षीरहोता करोति। अथाहिताग्निस्तु अतिसर्जनवाक्यात् प्रागेव प्रयतोप्याचम्य अपरेण वेदिमतिव्रज्य दक्षिणतस्तूष्णीमुपविशेदित्येके। विहारस्य दक्षिणत आहवनीयस्य समीपे उपविशेदित्यन्ये। अथातिसर्जनवाक्यं श्रुत्वा "ओमुन्नये" त्यतिसृजेदाहिताग्निः। उभयत्रापि प्रणवस्त्रिमात्रः। प्रवसिते यजमाने क्षीरहोतारमन्योतिसृजेत्। अन्यस्याभावे क्षीरहोतैवात्मानमतिसृजेत्। अन्यत्राजमानं प्रवसितो यजमान एव करोति। स्वयं होमेन यजमान एवातिसर्जनं प्रत्यतिसर्जनं करोति। एवमतिसृष्टः क्षीरहोता "भूरिडे" त्यादिचतुर्भिर्मन्त्रैश्चतुरः स्रुवान्पूरयित्वा स्थाल्या गृहीत्वा स्रुचि प्रक्षिपति। यो यजमानः पुत्राणामनुज्येष्ठमिच्छेत् तस्य क्षीरहोता अग्र्यं स्रुवं पूर्णतममुन्नयेत्। अथ वास्य यजमानस्य यः प्रियः पुत्रो भवति तमेव प्रति पूर्णं स्रुवमुन्नयेत्। बहुपुत्रस्य यजमानस्य चतुर्थादुपरि प्रिये पुत्रे सति पञ्चमं स्रुवं तूष्णीमुन्नयेदित्येके। सूत्रे पुनरुन्नयनग्रहणात्। अत एव केचित्पञ्चमं स्रुवं तूष्णीं सर्वेषामिच्छन्ति। पञ्चावत्तिनामपरे यदुचितं तद्ग्राह्यम्। अथाग्निहोत्रस्थालीमभिमृश्य समिधं स्रुचं गृहीत्वा गार्हपत्यस्योपरि हृत्वा प्राणसम्मितं कृत्वाहवनीयसमीपं नीत्वा तस्य पश्चात्पूर्वमेव स्थापितेषु प्रागग्रेषु कुशेषु उपसाद्य जान्वाच्य समिधमादध्यात्। आहवनीये "रजतांत्वे"ति यजमानेनाग्नय इदन्नममेति। समिदाधानवन्निपातितजानुरेवोदकं स्पृशेत् "विद्युदसि" तिमन्त्रेण। अथ प्रदीप्तां समिधं द्व्यंगुलमात्रे देशेभिजुहुयात् जा-

न्वाच्य "भूर्भुवःस्वरोमि"ति मन्त्रेण । अस्याः पूर्वाहुतिरिति संज्ञा । यजमानः "अग्नयेज्योतिषइदं नममे" ति त्यजेत् । एतां हुत्वा कुशेषु स्रुचं सादयति निपतितजानुरेव । अथ तथाभूत एव गार्हपत्यमवेक्षते । "पशून्मेयच्छे" ति मन्त्रेण । अन्ये तु गार्हपत्यं गत्वा तस्य पश्चात् प्राङ्मुखो भूत्वा तमवेक्षेतेति मन्यन्ते । अथ जान्वाच्योत्तरासंज्ञकामाहुतिं जुहुयात् अमन्त्रकाम् । पूर्वस्याः आहुतेर्भूयसीं तया चासंसृष्टां पूर्वाहुतेः प्रागुदग्देशे उत्तरतो वा । अस्यामाहुत्यां हूयमानायां प्रजापतिशब्दं चतुर्थ्यंतं ध्यायेत् । स्वाहाकारस्य केचिद्ध्यानमिच्छन्ति । केचिदुपांशुप्रयोगम् । "प्रजापतये इदं न मम" ति त्यागः । अग्निहोत्रहोमादन्यत्रापि तूष्णीं होमेषु चोद्यमानेषु एष एव विधिः प्रत्येतव्यः । अथ उत्तरस्या आहुतेर्भूमिष्ठं स्रुच्यवस्थाप्य तदाहवनीयस्योपरि त्रिरनुप्रकम्प्य कुशेषु स्रुचं निधाय पुष्करलेपमग्रमारभ्य बिलमानीय हस्तलेपं कुशमूलेषु निमार्ष्टि "पशुभ्यस्त्वे"ति मन्त्रेण । अथ दक्षिणत अंगुली उत्ताना: करोति कुशानां दक्षिणतो न कुशमूलानाम् । अथ प्राचीनावीती भूत्वा अंगुलीरंगुष्ठं चान्तरेण तूष्णीं "स्वधापितृभ्य" इति वा मन्त्रेण आपोऽवनीय " वृष्टिरसी " तिमन्त्रेणोपस्पृश्य स्वीयमनन्तरं कर्म कुर्यात् । अथ याजमानमुच्यते । तत्र क्षीरहोता समिधमाधीयमानामाहिताग्निरनुमन्त्रयते समिदाधानमन्त्रेण । अस्वाहाकारेण तेन ऋषिणेत्यनेन च । "ता अस्यस्तुददोहुस" इत्यृचा पूर्वाहुतिमनुमन्त्रयेत हूयमानाम् । उत्तराहुतिमुत्थायानुमन्त्रयते "भूर्भुवःस्व" रिति मन्त्रेण । अथ वाहुतिमीक्षमाण एव मन्त्रोक्तानि फलान्याकाङ्क्षन् । "उपत्वाग्नेदिवेदिव" इति तिसृभिः आग्नेयीभिश्च प्रत्यहमुत्तराहुतिमनुमन्त्रयते । "अग्नआयूंषिपवस" इति तिसृभिः संवत्सरे संवत्सरेनुमन्त्रयते । तदाह च । "उपत्वाग्नेदिवेदिव" इ-

स्यासां निवृत्तिरित्येके। अन्ये त्वाग्नेयीभिरग्नेरनुमन्त्रणमिच्छन्ति नाहुतेः। इति याजमानम् ॥ स्वयं होमित्वे तु विशेष उच्यते। तत्र समिदाधानानन्तरं समिदनुमन्त्रणमित्येके। पूर्वाहुतेः अनुमन्त्रणं कुशेषु सादनादूर्ध्वं कार्यम्। केचित्तु समित्पूर्वाहुत्योरनुमन्त्रणं गार्हपत्यावेक्षणादूर्ध्वमिच्छन्ति। उत्तराहुत्यनुमन्त्रणं स्रुग्घस्त एवोत्थाय भवति। इति स्वयं होमित्वे विशेषः। अन्यत्र क्षीरहोत्रा व्याख्यातं वेदितव्यम् ॥

अथाग्निहोत्रं यवाग्वा पयसा वा स्वयं पर्वणि जुहुयात् न द्रव्यान्तरेण। तथा स्वयमेव। पर्वणोन्यत्र काले ऋत्विजां मध्ये कश्चिदेको जुहुयात्। शिष्यो वा जुहुयात्। अथ क्षीरहोतुः प्रयोगः॥ यदुक्तं "वृष्टिरसिवृश्चमेपाप्मानमृतुश्रद्दे"त्यप उपस्पृश्येति। तदनन्तरमुदङ् आवृत्य भक्षयेत् हुतशेषं यद्यपरयोर्होमः। होमे त्वपरयोरग्न्योर्हुत्वा भक्षयेत्। "आयुषेत्वे" ति प्रथमं भक्षयेत् "अन्नाद्यायत्वे" ति उत्तरं भक्षयेत्। यथा प्रथमभक्षे मन्त्रान्ते प्राश्नामीति तथोत्तरेपि वेदितव्यः। अथापरयोर्होमः। प्रत्यगुदगुपविश्य जान्वाच्येत्यादिभिराहवनीयसमिद्धर्मैरुपेतो गार्हपत्ये समिधमादध्यात्तूष्णीम्। अथ तथाभूत एव स्थाल्याः स्रुवेणादाय "अग्नेगृहपतये स्वाहे" ति मन्त्रेण प्रदीप्तां द्व्यंगुलमात्रेभिजुहुयात्। उत्तराहुतिराहवनीयवद्वेदितव्या। इति गार्हपत्ये दक्षिणाग्नौ समिदाधाने गार्हपत्यवद्वेदितव्यम्। "अग्नयेसंवेशपतयेस्वाहे"ति दक्षिणाग्नौ पूर्वाहुतिः। "अग्नयेन्नादायान्नपतयेस्वाहे"ति वा। उत्तरा तु नित्या वेदितव्या। आहवनीयहुतशेषं विहाराद्बहिर्यथोक्तकाले भक्षयित्वा विहारं प्रविश्याभ्यात्ममपः स्रुचा निनयते "सर्पदेवजनेभ्यः स्वाहे" ति मन्त्रेण। त्रिवारं मन्त्रः क्रिया च। अथैनां कुशैः प्रक्षाल्य चतस्रः पूर्णाः स्रुचोऽपराजितायां निषिञ्चति " ऋतुभ्यः

स्वाहे” त्यादिभिश्चतुर्भिर्मन्त्रैः। पञ्चमीं स्रुचं कुशदेशे पूर्णां निनयति “पृथिव्याममृतमिष्टे”ति मन्त्रेण। षष्ठीं स्रुचं तूदकपूर्णामेव पश्चाद्गार्हपत्यस्य निनयेत् “प्राणममृते” ति मन्त्रेण। अथ गार्हपत्ये स्रुचं प्रतापयेदित्येके। आहवनीय इत्यपरे। अथान्तर्वेद्याः स्रुचं स्थापयति। परिचारकाय वा प्रयच्छेत्। अथ समिधो गृहीत्वाग्रेणाहवनीयं गत्वा तस्य तस्याग्नेर्दक्षिणत उदङ्मुखस्तिष्ठन्नेकैकस्मिन्नग्नौ तिस्रः तिस्रः समिध आदध्यात्। सर्वत्रापि प्रथमं समन्त्रं द्वितीयतृतीये तु सर्वत्रापि तूष्णीमादध्यात्। केचिदाहवनीये समिध आधायोत्तरेणाहवनीयमपरेण गार्हपत्यं गत्वा गार्हपत्यदक्षिणाग्न्योः समिदाधानमिच्छन्ति। अपरे तु दक्षिणेन दक्षिणाग्निं गार्हपत्यदक्षिणाग्न्योः समिदाधानमिच्छन्ति। अत्र यदुचितं तद्ग्राह्यम्। आहवनीये प्रथमसमिदाधाने मन्त्रः “दिदिही” ति। गार्हपत्ये “दीदाये” ति। दक्षिणाग्नौ “दीदिदाये” ति। एतेषु मन्त्रेषु केचित्स्वाहाकारमन्ते कुर्वन्ति। “ऋतसत्याभ्यां त्वे” ति पर्युक्षणमुक्तं तदत्रापि कर्तव्यम्। ताभ्यां पर्युक्षणाभ्यां परिसमूहने व्याख्याते। पर्युक्षणयोः पूर्वे भवतः। ततश्चायं पर्युक्षणधर्मः त्रिस्त्रिरेकैकं पुनः पुनरुदकमादायेति। तत्र क्रमः। तथा मन्त्रः। एते सर्वे परिसमूहनेऽपि भवन्ति। सर्वेषामतिदेशात्। तत्र मन्त्रलिङ्गत्वात् “ऋतसत्याभ्यां त्वापरिसमूहामी”त्यूहितव्यमित्येके। अन्ये तु मन्त्रं नेच्छन्ति विलिङ्गात्। ऊहस्य चानभिप्रेतत्वात् यत्र हि सूत्रकारस्य समानप्रकारेषु शब्दान्तरमभिप्रेतं भवति तत्र दर्शयति राध्यायदेनइति तु प्रणयेदिति। तथा च एवमुत्तरा अक्रातामक्रतेति यथार्थमिति। अत्र चैवमदर्शितत्वान्न मन्त्रविकारोऽत्राभिप्रेत इति ज्ञायते तस्मान्न मन्त्र इति॥ इति सायंहोमः॥ एवमेव प्रातर्होमेऽपि सर्वं भवति। विशेषस्तूच्यते। उदयसमीपे अपहृते

तमसि उदिते वा आदित्ये सर्वोयं विधिर्भवति । प्रातः पर्युक्षणे "सत्यऋताभ्यांत्वापर्युक्षामी" ति मन्त्रः कार्यः । "ओमुन्नेष्यामी" त्यतिसर्जनमन्त्रो भवति । "हरिणींत्वासूर्यज्योतिषमहरिष्टकामुपदधेस्वाहे" ति समिदाधानम् । "भूर्भुवःस्वरोंसूर्योज्योतिर्ज्योतिः सूर्यः स्वाहे" ति मन्त्रेण होमः कार्यः । न तु सायंहोमवत्तथाभूतेनात्र पुष्करमार्जनम् । किं तु विपरीतङ्कार्यम् । इत्यग्निहोत्रहोमः ॥

प्रवत्स्यन्नाहिताग्निः शुचिर्भूत्वा अग्निहोत्रवत्तूष्णीं विहृत्य प्रज्वाल्य विहाराद्वहिः कर्माङ्गाचमनं कृत्वा तीर्थेन विहारं प्रविश्य तं तमग्निमतिक्रम्य तस्य तस्य पश्चात्प्राङ्मुखः स्थित्वा तं तमुपतिष्ठति । तत्र "शंस्यपशून्मेपाहि" इति मन्त्रेणाहवनीयमुपतिष्ठेत । अथ दक्षिणात्तूदेव गत्वा गार्हपत्यमुपतिष्ठते "नर्यप्रजांमेपाही" ति मन्त्रेण । अथ दक्षिणाग्निमुपतिष्ठते "अथर्वपितुंमेपाही" ति मन्त्रेण । अथ तत्रस्थ एव गार्हपत्याहवनीयौ पश्येत् । "इमान्मेमित्रावरुणावि" ति मन्त्रेण । अथ गार्हपत्यदक्षिणाग्न्युपस्थानार्थं यथा आगतस्तथाहवनीयोपस्थानदेशपर्यन्तं प्रत्यागत्याहवनीयस्य प्रदक्षिणं कुर्वन् तमेवोपतिष्ठेत । "ममनामे" ति मन्त्रेणेत्येके । अन्ये तु यथेतं प्रत्येत्य विहारस्य प्रदक्षिणं कुर्वन् आहवनीयमुपतिष्ठेत इति वदंति । अथाग्नीन् रक्षमाणः प्रव्रजेत् "माप्रगामे" ति षट्कं सूक्तं जपन् । अत्र सूत्रे सूक्तग्रहणमप्रतिरथसूक्तवद्व्याख्येयम । सूक्तं समाप्य दूरादग्निभ्यो वाचं विसृजेत् । अस्मात्प्राक्सर्वत्र वाग्यमः कार्यः । "सदासुगः पितुमांअस्तुपन्था" इत्यनया ऋचा पन्थानमवरोहति । एवमग्निमुपस्थायैव प्रवासितव्यं नान्यथा । यदि बलानुपस्थिताग्निः प्रवासमापद्यते तत "इहैवसन्नि" ति मन्त्रेण अग्निमुपतिष्ठते । प्रतिदिशं दाल्प-

यित्वा। एतदुक्तं भवति। प्राच्यां दिश्याहवनीयं कल्पयेत् प्रतीच्यां गार्हपत्यम्। दक्षिणस्यां दक्षिणाग्निम्। तेनैव मानेन पूर्ववत्कर्माङ्गाचमनं कृत्वा तीर्थेन प्रपद्य तं तमग्निमतिक्रम्य तस्य पश्चात्प्राङ्मुखः स्थित्वा तन्तमग्निमेकैकमुपतिष्ठते "इहैवसन्नि" ति मन्त्रेण न युगपत्सर्वान्। मन्त्रस्यैकप्रकाशत्वात्। अथ पूर्वोक्तेन विधानेन प्रव्रजेत्। अथ उभयत्रापि प्रवसितोपि याजमानं कुर्यात्। तत्राप्यात्मसंस्कारान्यथा कुर्यात् यथा व्रतचर्यादीन् धर्मान् तथानुमन्त्रणादींश्च। तत्र कार्यपरिसमाप्तौ शुचिर्भूत्वा "अपिपन्थामगन्मही" त्येतया ऋचा प्रत्यागच्छति। अग्नेर्गृहसमीपं प्राप्यैव एतामृचं जपति। आगच्छगतां वा सेवाशान्त्यर्थमियमृग्भवतीति देवस्वामिनः। अथ गृहसमीपे शुचिर्भूत्वा समित्पाणिर्वाग्यतोग्नीन् ज्वलतः श्रुत्वा आहवनीयसमीपमागत्याहवनीयमीक्षेत "विश्वदीनीं" ति मन्त्रेण। अथ याः समिधो गृहीतास्तासामेकैकामेकैकस्याग्नेः समीपे निदधाति। अथ प्रत्यगुदगाहवनीयादवस्थाय तमेवोपतिष्ठते "ममनामतवचे" त्यनेन। ततो या उपनिहिताः समिधस्ता अग्निष्वभ्यादध्यात्। तत्र "अगन्मविश्ववेदस" मित्याहवनीये समिधमादध्यात्। "अयमग्निर्गृहपतिः" इति मन्त्रेण गार्हपत्ये "अयमग्निः पुरीष्य" इति मन्त्रेण दक्षिणाग्नौ। अथ तत्रस्थ एव गार्हपत्याहवनीयावीक्षेत "इमान्मेमित्रावरुणावि" ति मन्त्रेण। अथ यथेतं प्रत्येत्य परिसमूहति प्राक् दशरात्रात्॥

अथ नैमित्तिकम्। यदि तु ऊर्ध्वं दशरात्रात्प्रवासादागच्छति तदाज्यं संस्कृत्य प्रत्यगुदगाहवनीयादुपविश्य जान्वाच्य चतुर्गृहीतमाज्यं स्रुचा जुहुयात् "मनोज्योति"रिति मन्त्रेण। एकामेव। एके त्वाचार्या यावत्यो होमाहुतयः स्युस्तावत्य आ-

हुतयः कर्तव्या इति वदन्ति । तामेतामाहुतिमतीतहोमसंपत्त्यर्थं केचिन्मन्यन्ते । तेषां पक्षे होमो न कर्तव्यः । अन्ये तु कालातिपत्तिदोषनिर्घातार्थमाहुतिं मन्यन्ते । तेषां पक्षे होमोपि कर्तव्य एव । एवं दर्शपूर्णमासात्ययेपि पाथिकृतीं कृत्वा अतीतानि कर्माणि कुर्यादित्येके । नेत्यपरे । अथ प्रयोगः । दशरात्रादधिकप्रवासे आहुतिं हुत्वा परिसमूहति आहवनीयगार्हपत्यदक्षिणाग्नीन् । अथ विहारादुदङ् प्राङ्मुखस्तूष्णीमुपाविश्य " भूर्भुवः स्व" रितिवाचं विसृजेत् । अथ गृहान्पश्येत् । "गृहामाबिभीत" इतिमन्त्रेण । अनाहिताग्नेरप्येष विधिः समानो वेदितव्यः । अथ गृहान्प्रविशेत् "गृहानहंसुमनस"इति मन्त्रेण । अथ गृहानीक्षमाणः "शिवंशग्म" मिति त्रिर्जपेत् । अस्मिन्नहनि गृहमागता मनुष्या आहिताग्निना यदवगतं यच्चानवगतमप्रियं तदुभयविधमपि न ज्ञापयेयुः । अनुपस्थिताग्नेरपि । "अपि पन्थामगन्मही"त्यादि समानम् । अथ पक्षान्तरमुच्यते । प्रवसन्प्रत्येत्य च " अभयंवोभय " इति मन्त्रेण सर्वानग्नीनुपतिष्ठते । नान्यथेति प्रवसन्ब्राह्मणः श्रूयते । अत्र केचिदस्मिन्नपि पक्षे प्रथमपक्षोक्तं सर्वमपि भवतीति उपस्थानमात्रं निवर्तते इति वदन्ति । अन्ये तु एतस्मिन्पक्षे नान्यद्भवतीति । अस्मिन्पक्षे प्रयोगः कर्तव्यः । प्रवत्स्यन् शुचिर्भूत्वाग्नीन्प्रज्वाल्याचम्य तीर्थेन विहारं प्रविश्य गार्हपत्यस्य पश्चादवस्थाय सर्वानग्नीन्युगपदुपतिष्ठते । अथ प्रव्रजेदनपेक्षमाण इति प्रथमकल्पेन समानम् । अनुपस्थिताग्नेरपि प्रतिदिशमग्नीन्कल्पयित्वानेन विधिनोपस्थाय प्रथमकल्पवद्व्रजेत् । अथ कार्यसमाप्तौ शुचिर्भूत्वा "अपिपन्थामगन्मही"ति मन्त्रेणागत्याचम्याग्नीन् ज्वलतः श्रुत्वा विहारं तीर्थेन प्रविश्य प्रत्यगार्हपत्यादवस्थाय सर्वानग्नीनुपतिष्ठते "अभयं व"इति मन्त्रेण । अथ विहा-

रादुदगुपविश्येत्यादि प्रथमकल्पेन समानम्। इत्यनुपस्थिताग्नेरपि समानमेव सर्वम्। अहरहर्वाग्निहोत्रहोमोपस्थानसमये सायं प्रातः "अभयंव" इतिमन्त्रेणोपस्थानं कुर्यात्। अनाहिताग्नेस्तु प्रवासविधिं गृह्ये वक्ष्यामः॥ इति प्रवासोपस्थानविधिः।

अथ पिण्डपितृयज्ञः॥ अमावास्यायामपराह्णे पिण्डपितृयज्ञः कार्यः। यदा तूभयोरन्होरमावस्या भवति तदा तु यदहश्चन्द्रमा न दृश्यते तदहरपराह्णे पिण्डपितृयज्ञः कार्यः। तत्र शुचिर्भूत्वा विहारं प्रविश्य दक्षिणाग्नेरेकोल्मुकं प्राग्दक्षिणस्यां दिशि प्रणयेत् "ये रूपाणी" ति मन्त्रेण। एतदुक्तं भवति। क्वचित्काष्ठे अनेकमुल्मुकं भवति क्वचिदेकं तत्र यदेकं तत्प्रणयेत् नान्यदिति। येषां कर्मणामत्र दिशो नादिष्टास्तानि सर्वाणि प्राग्दक्षिणां दिशं कृत्वा कर्त्तव्यानि। यथा मध्यात्प्राग्दक्षिणार्धाच्चावदानम्। येषां वा दिगादेशः कृतस्तानि यथादिशमेव भवन्ति। यथा दक्षिणाग्नेः प्रागुदगिति। अथातिप्रणीतस्याग्नेरुपसमाधानं कुर्यादित्येके। दक्षिणाग्नेरित्यन्ये उभयोरित्यपरे। अथातिप्रणीतदक्षिणाग्नि परिस्तीर्य दक्षिणाग्नेः प्रागुदक्प्रत्यगुदग्वैकैकशः पात्राणि सादयेत्॥ चरुस्थालीशूर्पस्फ्योलूखलमुसलस्रुवध्रुवकृष्णाजिनसकृदाच्छिन्नेध्मसेक्षणकमण्डलूनित्येतेन। अत्र चरुस्थालिशूर्पं गृहीत्वा दक्षिणतोग्निष्ठं शकटमुच्यते तदारुह्य तत्र शूर्पे चरुस्थालीं कृत्वा सशिखा यथा भवति तथा व्रीहीन् पूरयेत्। अथ तां शिखां छिन्द्यात्। शूर्पे पतितान् व्रीहीन् अग्निष्ठे निदध्यात्। अथ कृष्णाजिने उलूखलमुसले कृत्वा स्थाल्यां ये व्रीहयः तानवहन्यात्। व्रीहितण्डुलान्विविच्य एवं यावत्सर्वे तण्डुला भवन्ति। तानवहतान्सकृत्प्रक्षाल्य दक्षिणाग्नौ श्रपयेत्। ततो दक्षिणाग्नेरारभ्य अर्वागतिप्रणीतात् स्फ्येन लेखामुल्लिखेत् "अपहताअसुरा" इतिमन्त्रेण।

ततस्तां लेखामभ्युक्ष्य सकृदाच्छिन्नैर्दर्भैरवस्तृणाति । अथाज्यं सर्पिरनुत्पूतं नवनीतं वा तूष्णीमुत्पूतं भवति । ततस्तदाज्यं ध्रुवायां कृत्वा दक्षिणाग्नेर्दक्षिणतः स्थापयेत् । आञ्जनाभ्यञ्जनकशिपूपबर्हणानि च । अथाज्येनाभिघार्य स्थालीपाकं प्राग्दक्षिणत उद्वास्य लेखायामासादयेत् । यद्यपि सूत्रे स्थालीपाकासादनं पूर्वमेव पठितं तथाप्येतावत्कृत्वासादयेदिति सूत्रं योज्यम् । अथ प्राचीनावीती भूत्वा दक्षिणाग्नौ तूष्णीमिध्मं प्रक्षिपेत् । अथ मेक्षणेनादायावदानसंपदा जुहुयात् । एतत्तदुक्तं भवति । स्रुवेण मेक्षणमभिघार्य मेक्षणेन स्थालीपाकाद्धविरवदाय स्रुवेण प्रत्यभिघार्य हविरवत्तं च दक्षिणाग्नेः प्रत्यगुदगुपविश्य जुहुयात् "सोमायपितृमत" इति मन्त्रेण। द्वितीयामप्याहुतिमेवं जुहुयात्। "अग्नयेकव्यवाहनाये" ति मन्त्रेण । आहुतिद्वयमपि स्वाहाकारेण जुहुयात् । तदाग्निं पूर्वं सोमं तु पश्चाज्जुहुयात् । यज्ञोपवीती च । स्वाहाकारपक्षे विप्रतिपत्तिः। केचित्सोमायपितृमते स्वधानमः स्वाहेत्यधिकं स्वाहाकारमिच्छन्ति । एव "मग्नयेकव्यवाहनाये" त्यत्रापि । अन्ये तु स्वधानम इत्यस्य स्थाने स्वाहाकारमिच्छन्ति । तेषां पक्षे " सोमायपितृमते स्वाहा अग्नयेकव्यवाहनाये" त्येवमेव । अथ यथाभूतेन होमः कृतस्तथाभूतेनैव मेक्षणमनुप्रहृत्य प्राचीनावीती भूत्वा लेखां त्रिरुदकेनोपसिञ्चेत् । "शुन्धन्तांपितर" इति त्रिभिर्मन्त्रैः । यत्र यत्र लेखोपरि उदकं निक्षिप्तं तत्र तत्र पिण्डं दद्यात् । पराङ्मुखेन पाणिना पितृतीर्थेन पितामहाय प्रपितामहाय चेति " एतत्त" इति मन्त्रेण । अत्र मन्त्रे असाविति पदस्थाने प्रथमया आमन्त्रणाविभक्त्या तस्य नाम गृह्णीयात् । अथाचार्यमतान्युच्यन्ते । गाणगारिमतम् । तेषां पितृपितामहप्रपितामहानां ये प्रेताः स्युः तस्मै तस्मै पिण्डान्निपृणीयात् । ये तु जीवन्ति तान्प्रत्यक्षम-

र्चयेत् । अस्याः क्रियायाः पित्राद्यर्थत्वात् । तौत्वालिमतम् । यद्यपि जीवान्तर्हितास्तथापि पितृभ्यः प्रेतेभ्य एव दद्यात् । न जीवतामर्चनं कार्यम् । क्रियां प्रति पित्रादीनां गुणत्वात् । गुणत्वं च नानाजातिगतानां पिण्डभोक्तृत्वायोग्यत्वात् । अथ गौतममतम् । पितृपितामहप्रपितामहानां मध्ये यो जीवति तस्यापि पिण्डदानं कार्यमेव । क्रियाया ह्यर्थकारित्वात् । अथास्माभिर्जीविमृतानामुपायविशेषः कथ्यते । यदुक्तं परेभ्यो दद्यादिति । न तावदत्र कर्त्तव्यमनधिकारात् । यदुक्तं प्रत्यक्षमर्चयेदिति तदपि न कर्तव्यम् । अनधिकारादेव । यदुक्तं जीवान्तर्हितेभ्यो निपृणीयादिति तदपि न । अनधिकारादेव । एतानि पक्षे दूषणानि यथासंभवं वेदितव्यानि । किं तर्ह्यनुष्ठेयं भवति, ये पित्रादीनां षण्णां मध्ये जीवा भवन्ति तेषां पिण्डान् जुहुयात् । न तेभ्यो निपृणीयात् । यस्य तु सर्वे जीवा भवन्ति तस्य सर्वहुतं भवति । अथ सर्वसम्मतः प्रयोगः । यदि पितृणां नामानि न जानीयात् तथा सति पिण्डदानमन्त्रे नामस्थाने ततः पितामहप्रपितामहेत्येतान् शब्दान्कुर्यात् । अथ निपृतान्पिण्डाननुमन्त्रयेत न हुतान् "अत्रपितर" इति मन्त्रेण । सव्यावृदुदङ्मुखोनुच्छ्वसन्नास्ते यावच्छक्नोति । अथ पिण्डान्प्रतिपर्यावर्तेत "अमीमदन्ते" ति मन्त्रेण। अथ चरोः प्राणभक्षं भक्षयेत्। अथ यदुक्तं निनयनं प्राचीनावीती लेखां त्रिरुदकेनोपनयेदित्यादि, तदत्र पिण्डेषु कर्तव्यम् । अथ पिण्डेष्वभ्यञ्जनं तैलेन करोति । "असावङ्क्ष्वे" ति मन्त्रेण। असावित्यस्य स्थाने पिण्डदानवन्नामपदं वेदितव्यम् । अथ पिण्डानञ्जनेनाञ्जयेत् "असावङ्क्ष्वे"ति मन्त्रेण। असावितिमन्त्रपदं पूर्ववद्व्याख्येयम् । अथ पिण्डेषु वासार्थे दशां दद्यात् ऊर्णासूत्रं वा । पञ्चाशद्भ्यो वर्षेभ्य ऊर्ध्वं यो यजमानः स्यात्स वासार्थे स्वलोम दद्यात् " एतद्वः पितर" इति मन्त्रेण । द-

शादिष्वपि मन्त्रः । अत्र केचिदभ्यञ्जनाञ्जनवत्प्रतिपिण्डेष्वभेदेन वासोदानमिच्छन्ति मन्त्रावृत्तिं च । अन्ये तु पिण्डत्रयेपि सकृदेव मन्त्रं मन्यन्ते । अथोत्थाय सर्वान्पिण्डानुपतिष्ठते "नमोवः पितर" इति मन्त्रेण । "मनोन्वाहुवामह" इति च तिसृभि ऋग्भिः । पिण्डेष्वेव च भक्तिः कार्या । उपस्थाय पिण्डान्प्रगमयेत् "परेतन" तिमन्त्रेण । अथ दक्षिणाग्नेःपिण्डदेशाद्दक्षिणाग्निप्रत्यागच्छेत् । "अग्नेतमद्याश्वन्नस्तोमै" रित्यृचा ततो गार्हपत्यं प्रत्येयात् "यदंतरिक्षे" इतिमन्त्रेण । अथ "वीरंमेदत्तपितर" इतिमन्त्रेण पिण्डानां मध्यममाददीतेति सूत्रे क्रियापदमध्याहर्तव्यम् । अथ पत्नीं प्राशयेत् । अथ पत्नी प्राश्नाति तथा ब्रूयादित्यर्थः । "आधत्तपितर" इतिमन्त्रेण मध्यमं पिण्डं प्राश्नीयात् । इतरावप्सु क्षिपेत् । अथ वातिप्रणीतेग्नौ । अथ वा यजमानस्य अभिनवान्नकाम्याभावे स तौ पिण्डौ प्राश्नीयात् महारोगेण वाभितप्तः प्राश्नीयात् । मरणजीवनयोरन्यतरां गतिं गच्छेत् ॥

अथानाहिताग्नेः पिण्डपितृयज्ञ उच्यते ॥ यथाहिताग्निर्दक्षिणाग्नौ करोति एवमेवाऽनाहिताग्निर्गृह्याग्नौ कुर्यात् । अयन्तु विशेषः । स्थालीपाकं श्रपयित्वातिप्रणयनं कुर्यात् । ततो जुहुयादिति वेदार्थक्रमे विशेषः । तथा "अग्नेतमद्याश्वन्नस्तोमैः, यदन्तरिक्ष" इतिमन्त्राभ्यां गृह्याग्निं प्रत्यागच्छेत् । "यदन्तरिक्ष" इतिमन्त्रे गार्हपत्यशब्दलोपः कार्य इति विशेषः । अन्यदाहिताग्निवत् । अथाहितानाहिताग्न्योः समानं द्वाभ्यां द्वे द्वे पात्रे उत्सृजति । अतिरिक्ते कमण्डलौ तृणं द्वितीयं गृहीत्वा उत्सर्गो भवति । इति पिण्डपितृयज्ञः ॥

अथाऽन्वारम्भणीयेष्टिः ॥ अथ प्रकृताग्न्याधानस्यानन्तरायां पौर्णमास्यां दर्शपूर्णमासारम्भः । तत्र दर्शपूर्णमासारम्भेष्टिर्भवति ।

तस्याः प्रयोग उच्यते। तस्यामग्नाविष्णू सरस्वती सरस्वानग्निर्भगी इति चतस्रो देवताः। आवाहने आज्यभागावावाह्य "अग्नाविष्णू ३ आवह सरस्वन्तम् आवह अग्निभगिनम् आवह देवांआज्यपामि"त्यादि पञ्चमे प्रयाजे। "ये ३ स्वाहाग्निस्वाहा सोमंस्वाहा अग्नाविष्णूस्वाहा सरस्वतीस्वाहा सरस्वन्तंस्वाहा अग्निभगिनंस्वाहा देवा" इत्यादि। वार्त्रघ्नावाज्यभागौ। प्रधानस्य। "अग्नाविष्णूसजोषसे" ति द्वे कल्पजे अग्नाविष्ण्वोः। "पावकानः सरस्वतीपावीरवी" ति सरस्वत्याः "पीपिवांसंसरस्वतोदिव्यंसुपर्णंवायस" मिति सरस्वतः। "आसत्वंसवितुर्यथाग्नोराधांस्याभरे" त्यग्नेर्भगिनः। प्रकृतिवत्संयाज्ये। "ये ३ ग्निस्विष्टकृतमयाडग्निरग्नेः प्रियाधामान्ययाट्सोमस्य० डग्नाविष्ण्वोः प्रि० सरस्वत्याः प्रि० सरस्वतः प्रि० अग्नेर्भगिनः प्रि० देवानामि" त्यादि सूक्तवाके। "अग्निरिदं० सोमइदं० अग्नाविष्णूइदं० जुषेतामवीवृधेतांमहो० क्रातांसरस्वतीइ० सरस्वानइ० अग्निर्भगीइदं० देवाआज्यपा" इत्यादि। पौर्णमासवदन्यत्सर्वं संस्थाजपान्तम्॥ इत्यन्वारम्भणीयेष्टिः॥

आधानानन्तरं तस्मिन्नेव संवत्सरे महान्व्याधिः पुत्रादिहानिर्भवेत्तदा उत्सर्गेष्ट्याऽग्नीनुत्सृज्य पुनराधानं कुर्यात्। अथ उत्सर्गेष्टिराचार्येणानुक्तापि पूर्वकारिकानुसारेणोच्यते। तस्याग्निः, अग्निर्वैश्वानरः, वरुणः, अग्निरंशुमान्, मित्रः इति पञ्चदेवताः। आवाहने आज्यभागावावाह्य "अग्निमावह अग्निं वैश्वानरमावह वरुणमावह अग्निमंशुमन्तमावह देवांआज्यपामि" त्यादि। पञ्चमे प्रयाजे "ये ३ स्वाहाग्निस्वाहा सोमंस्वाहाग्निंवैश्वानरंस्वाहा वरुणंस्वाहाग्निमंशुमन्तंस्वाहा मित्रंस्वाहा देवाआज्यपा" इत्यादि। वार्त्रघ्नावाज्यभागौ। प्रधानस्य "अग्निमूर्धाभुवोयज्ञस्ये" त्य-

ग्नेः। "वैश्वानरो अजीजनत्पृष्ठोदिवी" ति अग्नेर्वैश्वानरस्य। "अवतेहेड उदुत्तममि" ति वरुणस्य। "अप्स्वग्नेसधिष्ठवयदग्नेदिविजाअसी" त्यग्नेरंशुमतः। "मयोदध" इति वा याज्या। "अभयोमहिनादिवंप्रसमित्रमर्तो अस्तु प्रयस्वानि" ति मित्रस्य। प्रकृतिवत्संयाज्ये। "ये ३ ग्निस्विष्टकृतमयाडग्निरग्नेः प्रियाधामान्ययाट्सोमस्य प्रियाधामा० अग्नेः प्रि० अग्निवैश्वानरस्य प्रि० वरुणस्य प्रि० अग्नेरशुमतः प्रि० मित्रस्य प्रि० देवानामि" त्यादि सूक्तवाके "अग्निरिदं० सोमइदं० अग्निरिदं० अग्निर्वैश्वानरइदं० वरुणइदं० अग्निरंशुमानिदं० मित्रइदं० देवाआज्यपा" इत्यादि पौर्णमासवत्संस्थाजपान्तम। उत्सर्गेष्ट्या देवताद्वित्वमपि केचित् अग्निः, अग्निर्वैश्वानरश्चेति॥ इति उत्सर्गेष्टिः॥

अथ पुनराधेयेष्टिः॥ तस्यां बुद्धिमदिन्दुमद्गुणविशिष्टावग्नी आज्यभागदेवते। गुणयोगावाहनादौ व्यपदेशः कार्यः। बुद्धिमदिन्दुमन्तावित्याचक्षते। तथानुवृत्तिरित्यत्रेति वचनात्। अग्निः अग्निरग्निः पवमान आज्यभागौ। आवाहने "अग्निबुद्धिमन्तमावह अग्निमिन्दुमन्तमावह अग्निमावह देवां" इत्यादि। इत्यनुब्राह्मणपक्षे। "अग्निमग्नआवह अग्निं पवमानमावह अग्निमावह देवां" इत्यादि। इत्यनुब्राह्मणपक्षे। प्रयाजेषु विभक्तिप्रयोगः "समिधः समिधेग्नेग्नआज्यस्यव्यन्तुवौ० तनूनपादग्निमग्नआज्यस्यवेतुवौ इ० नराशंसोअग्नआज्यस्यवेतु इडोअग्निनाग्नआज्यस्यव्यन्तु बर्हिरग्निरग्नआज्यस्यवेतु ये ३ स्वाहाग्निबुद्धिमन्तंस्वाहा अग्निमिन्दुमन्तंस्वाहा अग्निस्वाहादेवा" इत्यादि अनुब्राह्मणपक्षे "स्वाहाग्निस्वाहाग्निपवमानंस्वाहाग्निस्वाहादेवा" इत्यादि। "समिधाग्निंदुवस्यतेह्युषुब्रवाणित" इत्याज्यभागयोः पुरोनुवाक्ये "ये ३ यजामहेग्निबुद्धिमन्तञ्जु-

षाणो अग्निराज्यस्यवेतूवौ० ये ३ महेग्निमिन्दुमन्तञ्जुषाणो अग्निरिन्दुमानाज्यस्यहविषोवेतू ३ वौ" । अनुब्राह्मणपक्षे प्रथमाज्यभागस्य पौर्णमासवद्याज्यानुवाक्ये । द्वितीयस्य "अग्नआयूंषिपवस " इत्यनुवाक्या । ये ३ यजामहेग्निंपवमानंजुषाणो अग्निः पवमानाज्यस्यहविषोवेतूवौ ३" । प्रधानस्य " अधाह्यग्नेक्रतोर्भद्रस्याभिष्टेअद्यगीर्भिर्गृणन्त " इत्यृचावग्नेर्याज्यानुवाक्ये । अथ स्विष्टकृतः " एभिर्नोअर्कैरि " त्यनुवाक्या । आगूर्य "अग्निस्विष्टकृतमयाडग्निरग्नेर्वृद्धिमतःप्रियाधामान्ययाट् अग्नेरिन्दुमतः प्रिया० अग्नेः प्रि० देवानामि " त्यादि " जुषताँहविरग्नेतमद्ये " ति याज्या । अनुब्राह्मणपक्षे " अग्निस्विष्टकृतमयाडग्निरग्नेः प्रिया० अग्नेः पवमानस्यप्रि० देवानामि " त्यादि० " जुषताँहविरग्नेतमद्ये " ति याज्या । अनुयाजेपि विभक्तिप्रयोगः " देवंबर्हिरग्नेर्वसुवनेवसुधेयस्यवेतु देवोनराशंसोग्नौवसुवनेवसुधेयस्यवेतु " तृतीयासु प्राकृत एव । सूक्तवाके । " अग्निर्वृद्धिमानिदंहविः अग्निरिन्दुमानिदंहविः अग्निरिदं० देवा " इत्यादि । अनुब्राह्मणपक्षे " अग्निरिदंहविः अग्निः पवमानइदंहविः अग्निरिदंहविः देवआज्यपा " इत्यादि । अन्यत्सर्वं संस्थाजपान्तं पौर्णमासवत् । प्रागुत्तमादनुयाजात्सर्वमप्युपांशुस्वरेण सुमन्द्रस्वरेण वा प्रयोक्तव्यम् । प्रधानं तूपांश्वेव। सर्वोपांशुत्वे आवहादीनां मन्द्रस्वरः। मन्त्राण्युपांशुतन्त्राणीति वचनात् । सुमन्द्रपक्षे तन्त्रस्वरो भवति । पुनराधेये द्वितीया अपि वारुणीष्टिरापस्तम्बेनोक्ता, नाश्वलायनेन । तस्यामग्नीवरुणौ देवता । "त्वंनोअग्ने, सत्वन्नोअग्ने" इति याज्यानुवाक्ये द्वे । अन्यत्सर्वं पौर्णमासवत्संस्थाजपान्तम् ॥ इति पुनराधेयेष्टिः ॥

अथाग्रयणेष्टिः॥ आग्रयणं व्रीहिश्यामाकयवानाम्। प्रत्येकमा-

हुतयः पृथक् पृथक् भवन्ति । एकमेव च समानतन्त्रं वा । तस्याः प्रयोग उच्यते । सामिधेनीषु "पृथुयाजा अमर्त्य" इति द्वे धाय्ये । आवाहने आज्यभागावावाह्य अनन्तरम् "अग्निमावह इद्राग्नी आवहविश्वान्देवानावह सोममावह द्यावापृथिवी आवह"इति चतस्रो देवताः । अस्यामिष्टौ आद्यं हविरुच्चैः । इतराण्युपांशु । पञ्चमे प्रयाजे "स्वाहाग्निंस्वाहा सोमंस्वाहाग्निस्वाहेन्द्राग्नीस्वाहा विश्वान्देवान्स्वाहा द्यावापृथिवी स्वाहा देवा" इत्यादि । "स्वाहाग्नेन्द्रौ स्वाहे"ति वा वार्त्रघ्नावाज्यभागौ । वृधन्वन्तौ वा । प्रधानस्य "अग्निर्मूर्द्धाभुवोयज्ञस्ये" त्यग्नेः । "ऐन्द्राग्नी अवसागतङ्गीर्भिर्विप्रः प्रमतिमिच्छमान"इति इद्राग्न्योः । अग्नीन्द्रपक्षे तु "आद्याये अग्निंमिन्धतेसुकर्माणः सुरुचोदेवयन्त" इत्यग्नीन्द्रयोर्याज्यानुवाक्ये । "विश्वेदेवास आगतयेकेचज्मामहिनो अतिमाया" इति विश्वेषां देवानाम् । "सोमयास्तेमयोभुवोयातेधामानिदिवियापृथिव्यामि"ति सोमस्य । "महीद्यौः पृथिवीचनः प्रपूर्वजेपितरानव्यसीभिरि"ति द्यावापृथिव्योः । विराजौ संयाज्ये " प्रेद्धो अग्ने, इमोअग्न " इत्येते । " अग्निंस्विष्टकृतमयाडग्नि० सोमस्य० अग्ने० इद्राग्न्योः अग्नेन्द्रयोर्वा विश्वेषां देवानां प्रि० सोमस्य० द्यावापृथिव्योः प्रि० देवाना"मित्यादि । अथ ब्रह्मणः प्राशित्रभक्षणे विशेषो भवति । ब्रह्मा प्राशित्रं गृहीत्वा दक्षिणेन पाणिना सव्ये पाणौ कृत्वा इतरेणाभिमृशेत् । " प्रजापतयेत्वे "ति मन्त्रेण । ततो निष्क्रम्य उपविश्य प्राङ्मुखो भूत्वा नित्यप्राशित्रं जपित्वा " भद्रान्त" इत्यनेन प्राश्नाति । अवान्तरेडायां यो विहितो भक्षजपो मन्त्रश्च एवं ग्रहणे निर्दिष्टमाचार्येण स तस्य जपस्य अवान्तरेडायाः प्राप्तत्वात् । प्राशनस्थानं स्पर्शविधानात्प्राप्नोति । न तस्योदनप्राशने वचनम् । इतरथा ह्येन भक्षिणो भक्षान् । नित्यनिर्देशात् । अ-

न्यस्यापि।। देवस्वामिनः सर्वेण नाभिमृशेत् "प्रजापतयेत्वे" ति मन्त्रेण। नेष्टिति पाठः। नित्यवचनं किमर्थं माभूदुपदेश इत्युपदेशः। इत्युपदेश इत्यनेन भक्षिणो भक्षानि प्राश्येति वा वचनात्। "सत्येनत्वे"त्यनेन पूर्ववदाचम्य ततो नाभ्यालम्भनं कुर्यात् "अमामसी"ति मन्त्रेण। इति ब्रह्मणो विशेषः। होतुरवान्तरेडाभक्षणे विशेषः। "इडेभाग" मिति जपित्वावान्तरेडां सव्ये पाणौ कृत्वा दक्षिणेन हस्तेनाभिमृशेत् "प्रजापतयेत्वे"ति मन्त्रेण। "भद्रान्तः" इति प्राश्य आचम्य नाभिदेशं दक्षिणेन पाणिनाभिमृशेत् "अमामसी" ति मन्त्रेण। ततः सूक्तवाके। "अग्निरिदं हविः सोम इदं० इदाग्नी० येतां०क्रातां०"। पक्षे देवताद्वन्द्वे चेति सूत्रेण आनङ् भवति। "अग्नेन्द्रौ० षे० धे० क्रातां विश्वेदेवा इदं० यन्तां० धेत० क्रत० सोम इदं० द्यावापृथिवी इदं०, येता० धेता० क्रातां देवा आज्यपा" इत्यादि। पौर्णमासवत्संस्थाजपान्तं सर्वम्॥ इत्याग्रयणेष्टिः॥

नैमित्तिकी यज्ञविभ्रेष्टिरुक्ता आपस्तम्बेन॥ तस्यामाग्निरिन्द्रः सोमो देवता। आज्यभागावावाह्य अनन्तरम् "अग्निमावह इन्द्रमावह सोममावह देवांआज्यपामि" त्यादि। पञ्चमे प्रयाजे। "स्वाहाग्निंस्वाहा सोमंस्वाहाग्निंस्वाहेन्द्रंस्वाहा सोमंस्वाहा देवा" इत्यादि। वार्त्रघ्नावाज्यभागौ "अग्निर्मूर्द्धाभुवोयज्ञस्ये"त्यग्नेः। "ऐन्द्र सानसिंरयिंमसस्साहिष" इतीन्द्रस्य। "सोमयास्तेमयोभुवायातेधामानि" इति सोमस्य। प्रकृतिवत्संयाज्ये। "अग्निस्विष्टकृतमयाडग्निरग्नेः प्रिया० सोमस्य प्रि० अग्नेः प्रि० इन्द्रस्य प्रि० सोमस्य प्रि० देवानामाज्यपा"मित्यादि। सूक्तवाके। "अग्निरिदं० सोम इदं० अग्निरिदं० इन्द्र इदं० सोम इदं० देवा आज्यपा" इत्यादि। पौर्णमासवत्संस्थाजपान्तम्॥ इत्यापस्तम्बोक्ता वि-

भ्रष्टेष्टिः ॥

अथ काम्येष्टयो वक्ष्यन्ते ॥ तत्रायुष्कामेष्टिः ॥ तस्याम् "आ-नो अग्नेषु चेतुनात्वं सोममहेभग"मिति जीवातुमतोराज्यभाग-योरनुवाक्ये । नित्ये याज्ये । द्वे प्रधानदेवते । अग्निरायुष्मान्, इन्द्रस्त्राता । "आयुष्टेविश्वतो दधादि" ति द्वे कल्पज्ञे याज्यानु-वाक्ये अग्नेरायुष्मतः*। "त्रातारमिन्द्रमवितारमिन्द्रंमाते अस्यां म-हसावन्यरिष्टात्रि"तीन्द्रस्य त्रातुः । " पाहिनो अग्ने पायुभिरग्नेत्वं पारयानव्यो अस्मानि" ति स्विष्टकृतः संयाज्ये । पौर्णमासवद-न्यत्सर्वं संस्थाजपान्तम् ॥ इति आयुष्कामेष्टिः ॥

अथ स्वस्तिगमनार्थं स्वस्त्ययनीष्टिः ॥ " अग्नेरक्षाणो अंहस-स्त्वन्तः सोमाविश्वतोरक्षाराजन्न" इति रक्षितवन्तावाज्यभागयोः पुरोनुवाक्ये । नित्ये याज्ये । " अग्निः स्वस्तिरिमान्देवता, स्व-स्तिनोदिवो अग्ने पृथिव्या आरे अस्मदमतिमारे अंह " इति या-ज्यानुवाक्ये । "पाहिनो अग्नेपायुभिरग्नेत्वं पारयानव्यो अस्मानि" ति संयाज्ये । पौर्णमासवदन्यत्सर्वं संस्थाजपान्तम् ॥ इति स्वस्त्य-यनेष्टिः ॥

अथ पुत्रकामेष्टिः ॥ अग्निः पुत्री देवता । वार्त्रघ्नावाज्यभा-गौ । "यस्मैत्वंसुकृतेजातवेदोयस्त्वाहृदाकीरिणामन्यमान" इत्यग्नेः पुत्रिणः । "अग्निस्तुविश्रवस्तममि"ति द्वे संयाज्ये । पौर्णमासव-दन्यत् ॥ इति पुत्रकामेष्टिः ॥

अथाग्नेयीष्टिः ॥ तस्यां धाय्ये विराजौ । अग्निर्मूर्द्धन्वान्देवता । वार्त्रघ्नौ । " अग्निर्मूर्द्धा भुवोयज्ञस्य " सग्नेर्मूर्धन्वतः । समानं संस्थाजपान्तम् ॥ अथाऽपराऽऽग्नेयीष्टिः ॥ धाय्ये विराजौ । अ-ग्निः कामो देवता । "तुभ्यन्ता अङ्गिरस्तमाश्यामतं काममग्नेत-वोती"ति अग्नेः कामस्य । पौर्णमासवदन्यत् ॥

अथ वैमृधीष्टिः॥ धाय्ये विराजौ। इन्द्रो वैमृधो देवता। "वि-नइन्द्रमृधोजहि मृगानभीमः कुचरोगिरिष्ठा" इति याजानुवाक्ये। पौर्णमासवदन्यत्॥ अपरावैमृधीष्टिः॥ धाय्ये विराजौ। इन्द्रो वैमृधो देवता। "सद्युतिमिन्द्रे"ति द्वे कल्पजे याज्यानुवाक्ये। पौर्णमासवदन्यत्॥

अथैन्द्रीष्टिः॥ धाय्ये विराजौ। इन्द्रो दाता देवता इन्द्रः पुनर्दाता देवता। "यो नो धनानी"ति द्वे कल्पजे उभयोरपि याज्यानुवाक्ये पौर्णमासवदन्यत्॥

अथाशेष्टिः। धाय्ये विराजौ। आशा देवता आशापाला वा। "आशानामाशापालेभ्य" इति द्वे कल्पजे उभयोरपि याज्यानुवाक्ये। पौर्णमासवदन्यत्॥

अथ लोकेष्टिः॥ धाय्ये विराजौ। पृथिव्यन्तरिक्षं द्यौरिति तिस्रो देवताः। "पृथिवीं मातरंमहीमि" ति तिस्रः कल्पजास्त्रयाणां याज्यानुवाक्याः। आद्ये तु पृथिव्याः, द्वितीयतृतीये, अन्तरिक्षस्य तृतीयप्रथमे दिवः। पौर्णमासवदन्यत्सर्वम्॥

अथ मित्रविन्देष्टिः॥ महाविराजौ तस्या एव संज्ञा। धाय्ये विराजौ। अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता पूषा सरस्वती त्वष्टेत्येकप्रदाना दश देवताः। आवाहनकाले द्वितीयाविभक्त्या पृथक् आदिश्य सकृदेवावहशब्दं कुर्यात्। सर्वा आदिश्य सकृदेकप्रदाना इति वचनात्। पञ्चमे प्रयाजे पुरस्तात्सकृदेव स्वाहाकारयुक्ता सर्वा देवता आदिश्य "स्वाहादेवाआज्यपा" इत्यादि। "अग्निः सोमोवरुण" इति विकल्पजा पुरोनुवाक्या। प्रतिलोममादिश्य "यजत्वष्टारं सरस्वतीं पूषणं सवितारं बृहस्पतिमिन्द्रं मित्रं वरुणं सोममग्निमि"त्यादिश्य "त्वष्टारूपाणी" त्यनया कल्पजया यजति। स्विष्टकृति षष्ठ्या वि-

भक्त्या सर्वाः पृथगादिश्य सकृदेव प्रियाधामान्यथादृशब्दमुक्त्वा देवानामाज्यपानामित्यादि । सूक्तवाके । प्रथमया विभक्त्या सर्वाः पृथगादिश्य सकृदेव " इदंहविरजुषतामि " त्यादि एकवच्छब्देन ब्रूयात् । तथा चोक्तम् । तथोत्तरेषु निगमेष्वेकामिव संस्तुयात् । पौर्णमासवदन्यत् । आग्नेयादीनां मित्रविन्दान्तानामिष्टीनामनुक्तकामानां शास्त्रान्तरात् कामा अन्वेषणीयाः ॥

अथ स्नुषाश्वशुरीयेष्टिः । तयाभिचरन्यजेत । इन्द्रः सूरो देवता । "इन्द्रः सूरोअतरद्रजांसी" ति द्वे कल्पजे याज्यानुवाक्ये । " जुष्टोदमूनाअग्नेशर्द्धमहतेसौभगाये " ति संयाज्ये । पौर्णमासवदन्यत् ॥

विरुद्धानां सम्पत्तिकामः संज्ञानीष्ट्या यजेत ॥ अग्निर्वसुमान् सोमो रुद्रवान् इन्द्रो मरुत्वान् वरुण आदित्यवान् इत्येकप्रदानाश्चतस्रो देवताः । एकप्रदानप्रयुक्तविशेषा मित्रविन्दायामुक्ताः । " अग्निः प्रथमोवसुभिरि " ति द्वे कल्पजे याज्यानुवाक्ये पौर्णमासवदन्यत् ॥

विरोधकाम ऐन्द्रामारुत्या यजेत ॥ इन्द्रो मरुतश्च द्वे द्वे देवता । " ऐन्द्रसानसिंरयिंप्रससाहिष " इतीन्द्रस्य । " मरुतोयस्य हिक्षयेप्रशर्द्धायमारुतायस्वभानव " इति मरुताम् । तत्रैवं विशेषः । " एन्द्रसानसिमि " ति पुरोनुवाक्यामनूच्य " प्रशर्द्धाय मारुतायस्वभानव " इति यजति । " मरुतोयस्यहिक्षय " इति पुरोनुवाक्यामनूच्य " प्रसाहिष " इति यजति । ऐन्द्रीमनूच्य मारुत्या यजति मारुतीमनूच्यैन्द्र्या यजेति । इन्द्रपूर्वं निगमेषु आवाहनादिषु उत्तमे प्रयाजे च । प्रधानादूर्ध्वं स्विष्टकृदादिषु मरुतः प्रथमं पश्चादिन्द्रम् । पौर्णमासवदन्यत् ॥ अथेयमिष्टिः सम्पत्तिकामानां प्रकृत्या भवति ऐन्द्रीमनूच्यैन्द्र्या यजेत । मारुतीमनूच्य मा-

रुत्यां यजेत । उक्ता याज्यानुवाक्याः । प्रकृत्यैव निगमनम् । अन्यत्पौर्णमासेन समानम् । संपत्तिकामः संज्ञानीं च कुर्यात् । सा च पूर्वमेवोक्ता ॥

अथ शत्रुभिरभिभूयमानः प्रधृष्यमाणः ऐन्द्रा बार्हस्पत्या यजेत ॥ इन्द्राबृहस्पती देवता । "आन इन्द्राबृहस्पती अस्मे इन्द्राबृहस्पती" इति याज्यानुवाक्ये । केवलेन्द्रपक्षेप्येते एव । अन्यत्समानम् ॥

अथ वैश्वानरीयेष्टिः ॥ अग्निर्वैश्वानरो देवता । "वैश्वानरो अजीजनत्पृष्टो दिवी" ति याज्यानुवाक्ये । अन्यत्समानम् ॥

अथ व्रातपत्येष्टिः ॥ अग्निर्व्रतपतिर्देवता । "त्वमग्ने व्रतपा असि यद्वोवयं प्रमिनामव्रतानी" ति याज्यानुवाक्ये । अन्यत्समानम् ॥

अथ पवित्रेष्टिः ॥ तस्याम् "अपामिदन्ययनं नमस्तेहरसेशोचिष" इति द्वे कल्पजे धाय्ये "पृथुपाजा अमर्त्य" इत्येतयोः स्थाने। पावकवन्ताबाज्यभागौ। आज्यभागावावाह्य प्रधानदेवता आवाहयति। अग्निं पवमानं सरस्वतीं प्रियामग्निं पावकं सवितारं सत्यप्रसवमग्निं शुचिं वायुं नियुत्वन्तमग्निं व्रतपतिं दधिक्रावाणमग्निं वैश्वानरं विष्णुं शिपिविष्टमिति दश। "अग्नीरक्षांसिसेधतियोधारयापावकये" त्याज्यभागयोः पुरोनुवाक्ये। "यत्तेपवित्रमर्चिषी" ति पूर्वस्याज्यभागस्य याज्या। "आकलशेषुधावती" त्युत्तरस्य याज्या। अथ प्रधानानाम्। "अग्नआयूंषिपवसेअग्नेपवस्वपा" इत्यग्नेः पवमानस्य। "उतनः प्रियाप्रियास्विमाजुह्वानायुष्मदानमोभि" रिति सरस्वत्याः प्रियायाः। "सनः पावकदीदिवोअग्नेपावकरोचिषे" त्यग्नेः पावकस्य। "आविश्वदेवंसत्पतिनप्रामियेसवितुर्दैव्यस्यतादि" ति सवितुः सत्यप्रसवस्य। "अग्निः शुचिव्रतमउदग्नेशुचयस्तव" त्यग्नेः शुचेः। "वायुरग्रेगायज्ञप्रीर्वायोशुक्रोअयामित" इति वायोर्नियुत्वतः। "त्वमग्नेव्रतपाअसियद्वोवयंप्रमिनामव्रतानी" त्यग्नेर्व्रतपतेः।

"दधिक्राव्णो अकारिषमादधिक्राः शवसापंचकृष्टीरि" ति दधिकाव्णः । "वैश्वानरोअजीजनत्पृष्ठोदिवी" त्यग्नेर्वैश्वानरस्य । "वषट्तेविष्णवास आकृणोमिप्रतत्तेअद्यशिपिविष्टनामे" ति विष्णोः शिपिविष्टस्य । "जुष्टोदमूना अग्नेशर्द्धमहतेसौभगाये" ति संयाज्ये । पौर्णमासवदन्यत् ॥ एषा इष्टिराचार्येण चोक्ता इति केचित् । तेषां मते अध्वर्युवशादाग्नेयव्यतिरिक्तानां पञ्चानामेवोपांशुत्वं नाग्नेयानाम् । वैश्वानरी व्रातपती पवित्रेष्टिरिति तिस्र इष्टयः पापक्षयार्थाः । तदुक्तम् । वैश्वानरीं व्रातपतीं पवित्रेष्टिं तथैव च । ऋतावृतौ प्रयुञ्जानः पुनाति दशपौरुषान्मिति । तथा च दशपूर्वान्दशापरानित्यनेन सहैकविंशतिपङ्क्तिं पुनातीति बौधायनोक्तम् ॥

अथ वर्षकामेष्टिः कारीरी ॥ तस्यां "प्रतित्यंचारुमध्वरमीडे अग्निस्त्ववसन्नमोभिरि" ति धाय्ये पृथुपाजा अमर्त्य इत्येतयोः स्थाने । "अप्स्वग्नेसधिष्टवप्सुमेसोमो अब्रवीदि" त्यप्सुमन्तावाज्यभागयोः पुरोनुवाक्ये । नित्ये याज्ये । अग्निर्धामच्छत् केवलोऽग्निर्वा मरुतः सूर्य इति तिस्रो देवताः । आवाहने आज्यभागावावाह्य "अग्निंधामच्छदं आ० मरुत आवह सूर्यं आ० देवां" इत्यादि । उत्तमे प्रयाजे "ये० स्वा० ग्नि० सो० स्वा० धामच्छदं स्वा० मरुतः स्वा० सूर्य स्वा० मरुतांप्रि० मरुतः स्वाहादेवा" इत्यादि । "ये० ग्नि स्विष्ट० रग्ने प्रि० दूसो० प्रि० डग्नेर्धामच्छदः प्रि० मरुतां सूर्यस्य प्रि० देवाना० जुषतां यत्वादेवाप्रि०" सूक्तवाके "अ० सो० अग्निर्धामच्छद इदं० मरुत इदं० षन्तां सूर्य०" प्रधानाम् । "त्वंत्याचिदच्युताधामन्तेविश्वंभवनमि" ति अग्नेर्धामच्छदः । केवलाग्निपक्षे । "हिरण्यकेशो रजसोविसार" इति द्वे । "वाश्रेवविद्युन्मिमातिपर्वतश्चिन्महिवृद्धोविभाये" ति मरुताम् । "सृजन्तिरश्मिमोजसावाहिस्त्रेभिर्विहरन्त्यासी" ति सूर्यस्य । "अग्नेबा-

धस्त्वविमृध्रोयंत्वादेवापिरि"ति संयाज्ये। पौर्णमासवदन्यत्। प्रायश्चित्तहोमानन्तरम् "अच्छावद्वामि"ति चतसृभिः प्रत्यृचं चतस्रो दिश उपतिष्ठते। सूक्तेन सूक्तेन वैकैकं दिशमुपतिष्ठते। उपस्थाय संस्थाजपं कुर्यात्। तिस्रः पिण्ड्य उत्तराः पिण्डीद्रव्या मरुद्देवत्याः। इष्ट्यात्मको दर्विहोमात्मको वर्षकामस्य भवति। तत्र दर्विहोमपक्षे न होतुः प्रयोगः। इष्टिपक्षे तु। "उदीरयथा प्रवोमरुतः आयन्नरोविद्युन्महसः कृष्णं नियानं नियुत्वन्तोग्रामजित" इति त्रयाणां याज्यानुवाक्याः। अन्यत्सर्वं कारिरीवदेव॥

अथ सांवत्सरिकाणीष्ट्ययनान्युच्यन्ते। तेषां फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा प्रयोगः। कामविशेषा अध्वर्युतो ज्ञातव्याः॥ तुरायणं नामेष्ट्ययनं सांवत्सरिकम्॥ अहरहरनुसवनं तिस्र इष्टयो भवन्ति। आग्नेयी प्रातःसवने, ऐन्द्री माध्यन्दिने, अपराह्णे वैश्वदेवी। अथ वा एकैव त्रिहविष्का प्रातःसवन एव कर्तव्या। "अग्निर्मूर्द्धा भुवोयज्ञस्ये" त्यग्नेः। "ऐन्द्रसानसिंरयिमसत्साहिष" इतीन्द्रस्य। "विश्वेदेवासआगतयेकेचज्यामहिन" इति विश्वेषां देवानाम्। पौर्णमासवदन्यत्॥ दाक्षायणो नामेष्ट्ययनम्॥ तस्मिन् द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत। एतदुक्तं भवति। या पौर्णमासी या अमावास्या ते एव स्वकाले द्विरावर्तयितव्ये इति। आवृत्तयोः पूर्वे ये ते उक्ते एव न विकृत एव। अग्निरग्नीषोमौ पूर्वपौर्णमास्याम्। अग्निरिन्द्रश्चोत्तरस्यां पौर्णमास्याम्। याज्यानुवाक्याः प्राकृता एव। अग्निरिन्द्राग्नी पूर्वामावास्यायाम्। याज्यानुवाक्याः प्राकृता एव। उत्तरस्याममावास्यायां अग्निमित्रावरुणौ देवते। अग्नेः प्राकृत एव याज्यानुवाक्ये। "आनोमित्रावरुणायद्वांहिष्ठं नातिविवेसुदान" इति मित्रावरुणयोः॥ इडादधो नामेष्ट्ययनम्॥ तत्र प्रजापतिर्देवता। "प्रजापतेनत्वदेतान्यन्यस्तेव-

मालोकाः" प्रदिशोदिशश्चे"ति याज्यानुवाक्ये । पौर्णमासवदन्यत् ॥ द्यावापृथिव्योरयनं नामेष्ट्ययनम् ॥ फाल्गुन्यां पौर्णमास्यामुपक्रम्य पौर्णमासेन अमावास्यापर्यन्तं यजेत् । अमावास्यामुपक्रम्य पौर्णमासीपर्यन्तमहरहरमावास्येन यजेत । तयोरुक्तः प्रयोगः । एवं व्यत्यस्य संवत्सरं यजति । अत्र दर्शपूर्णमासयोः पुनः क्रिया नास्ति ॥ इति द्यावापृथिव्योरयनम् ॥

अथास्मिन्सूत्रे असमाम्नातानामिष्टीनां शास्त्रान्तरे विहितानामनुक्तयाज्यानुवाक्यानां देवतालक्षणयाज्यानुवाक्येत्यादिलक्षणविशिष्टा याज्यानुवाक्या ग्राह्याः । तादृग्लक्षणप्रयुक्तानामनभिगमे याज्यानुवाक्याभ्यां याभ्यां काभ्यां चिदाग्नेयीभ्यां यजेत । व्याहृतिभिर्वा यजेत । व्याहृतिपक्षे देवतामादिश्य प्रणुयाद्यजेच्च । यथा "अग्निर्भूर्भुवःस्वरो३मि"त्यनुवाक्या । "ये ३ यजामहेऽग्निर्भूर्भुवःस्वरग्नी३वौषडि"ति निदर्शनम् । नम्राभ्यां वा यजेत् । "इममाश्रुणुधीहवमि" ति द्वे कल्पजे याज्यानुवाक्ये एते द्वे नम्रे प्रयुज्येते । याः पुनः शास्त्रान्तरे विहितास्तत्रैव याज्यानुवाक्यामृगारेष्टिप्रभृतयस्तासां तथैव प्रयोगः । अग्निमथनसंयुक्तानां तु वैराजतन्त्रं भवति । अग्निमन्थनेपि धाय्ये एव । केवलनिराजाविति केचित् ॥

अथ चातुर्मास्यान्युच्यन्ते ॥ तेषां फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा प्रारम्भः । प्रारभमाणः पूर्वेद्युरन्वारम्भणीयां वैश्वानरपर्जन्यामिष्टिं कुर्यात् । अग्निर्वैश्वानरपर्जन्य इति देवते । "वैश्वानरोअजीजनत्पृष्टोदिवी" त्यग्नेर्वैश्वानरस्य । "पर्जन्यायप्रगायतप्रवांती" ति पर्जन्यस्य । पौर्णमासवदन्यत् । अग्न्याधेयप्रभृत्येतदन्तानामिष्टीनां प्रधानहवींषि उपांशुस्वरेण । तत्रोत्सर्गेष्टिर्वैश्वानरी व्रातवती पवित्रेष्टिरित्येताश्चतस्रः सूत्रकारोक्ता न भवन्ति ।

ततस्तासामध्वर्युवशात्तन्त्रस्वर एव । चातुर्मास्येष्वपि वैश्वदेववरुणप्रघासमाहेन्द्रशुनासीराणां प्रधानहवींष्युपांश्वित्येके ॥

अथ प्रातर्वैश्वदेवीष्टिर्भवति ॥ तत्र प्रेषितो होता स्थानाचमने कृत्वा पश्चात्सामिधेनीस्थानस्य पदमात्रेऽवस्थाय प्रेषितोभिहिंकृत्य अग्निमन्थनीया अन्वाह । " अभित्वादेवसवितरि " त्येका । " महीद्यौः पृथिवीचन " इत्येका । " त्वामग्नेपुष्करादधी " ति तिसृणामर्द्धर्चे शिष्ट्वारमेत । आमंपात । यदि अग्निः शीघ्रं न जायेत तदा एतस्मिन्नेवावमाने " अग्नेहंसिन्यत्रिणी " ति नवर्चं सूक्तमावपेत पुनः पुनराजन्मनः । जातायेति संप्रेषितः अनन्तरमणवेन धनअर्यरणेरणेमुतब्रुवन्तुजन्तवइत्येतामुपसन्तनोति । " आयंहस्तेनखादिनमि " त्येका अस्या अर्द्धर्चे आरमेत । प्रह्रीयमाणायेति प्रेषितः " विशामग्निस्वध्वरोंमदेवं देववीतय " इति द्वे "अग्निनाग्निरि " त्येका " तमर्जयन्तुसुक्रतुमि" त्येका " यज्ञेनयज्ञमयजन्तदेवा " इति परिदध्यात । आद्योत्तमे त्रिः । अथ सामिधेनीस्थाने स्थित्वा सामिधेनीरन्वाह । " पृथुयाजाअमर्त्य " इति द्वे धाय्ये । आज्यभागावावाह्य अष्टौ प्रधानदेवता आवाहयति । "अग्निमावह सोममावह सवितारमावह सरस्वतीमावह पूषणमावह मरुतः स्वतवसआवह " केवलपक्षे " मरुतआवह विश्वान्देवानावह द्यावापृथिवीं आवह देवांआज्यपा " इत्यादि नव प्रयाजाः । प्रागुत्तमाच्चतुर आवपेत " दुरोअग्ने, उपासानक्ता, दैव्याहोतारा, तिस्रोदेवी " उत्तमे प्रयाजे " येस्वाहाग्निस्वाहा सोमं स्वाहाग्निस्वाहा सोमंस्वाहाउ सवितारंस्वाहा सरस्वतींस्वाहा पूषणंस्वाहामरुतः स्वतवसः " मरुत्पक्षे " मरुतः स्वाहाविश्वान्देवान्स्वाहाउ द्यावापृथिवीस्वाहादेवा " इत्यादि । वार्त्रघ्नावाज्यभागौ । प्रधानस्य । " अग्निर्मूर्धाभुवोयज्ञस्य " इत्यग्नेः " सोम-

यास्तेमयोंभुवोयातेधामानी" ति सोमस्य । "आविश्वदेवं वामम-
द्ये " ति सवितुः । "पावकानः सरस्वतीपावीरवीकन्याचित्रायुरि"
ति सरस्वत्याः । "पूषन्तवव्रतेवयंशुक्रन्तेअन्यदि " ति पूष्णः।"इ-
हेहवस्वतवसः प्रचित्रमर्कंगृणतेतुराये " ति मरुतां स्वतवसाम् ।
" मरुतोयस्यहिक्षयेराइवेदचरमाअहेवे " ति केवलमरुत्पक्षे ।
" विश्वेदेवासआगतयेकेचज्मा " इति विश्वेषां देवानाम् । " म-
हीद्यौः पृथिवीचनः प्रपूर्वजेपितरानव्यमीभिरि " ति द्यावापृथि-
व्योः । विराजौ संयाज्ये । "प्रेद्धो अग्नइमो अग्न" इति । "ये ३
ग्निस्विष्टकृतमयाडीग्नरग्नेः प्रि० सोमस्य प्रि० इग्नेः प्रि० सोम-
स्य प्रि० सवितुः उ प्रि० सरस्वत्याः प्रि० पूष्णः प्रि० मरुतां
स्वतवसां प्रि"० केवलपक्षे "मरुतां प्रि० विश्वेषांदेवानां प्रि० द्या-
वापृथिव्योः उ प्रि० देवानामि " त्यादि । " जुषतांहविरिमोअ-
ग्न " इति याज्या । नवानुयाजाः " देवंबर्हिः १, देवीर्द्वारः २,
देवीउषासानक्ता ३, देवीजोष्ट्री ४, देवीऊर्जाहुती ५, देवीदैव्या ६,
देवीस्तिस्रः७, देवोनाराशंमः ८, देवोअग्निः ९ " सूक्तवाके "अ-
ग्निरिदं० सोमइदं० अग्निरिदं० सोमइदं० सवितोउ० इदं० सर-
स्वतीदं० पूष्णेदं० मरुतः स्वतवसइदं० प धंक्रन" । केवलपक्षे
"मरुत इदं० पं० क्रन, विश्वेदेवा इदं० पं० धं० क्रत, द्यावा-
पृथिवी इदं० पेता० धेतां क्रातां देवा आज्यपा" इत्यादि । अनु-
याजानां सूक्तवाकस्य शंयुवाकस्य वोपरिष्टाद्वाजिनयागः । "शं-
नोभवन्तुवाजिन" इत्यनुवाक्या । आदिश्य "वाजेवाज" इति ऊ-
र्ध्वज्ञुरनवानं यजति । प्रकृत्यैव तिष्ठन्नोनुवषट्करोति । "अग्नेवी-
हीवौषट्" । "वाजिनस्याग्ने वीही" ति वा । वाजिनभक्षमिडामिव
प्रतिगृह्य "अध्वर्यउपह्वयस्व, ब्रह्मन्नुपह्वयस्व, अग्नीनुपह्वयस्व,
यजमानोपह्वयस्व, यन्मेरेत" इति मन्त्रेण प्राणभक्षं भक्षयेत् ।

ब्रह्मा च । यजमान एव प्रत्यक्षं भक्षयति । पौर्णमासवदन्यत् । पौर्णमासं कृत्वा चातुर्मास्यव्रतानि कुर्यात् । केशानि वर्तयेदित्यादि । आद्योत्तमयोर्वेत्यन्तम् ॥

अथ पञ्चम्यां पौर्णमास्यां वरुणप्रघासा भवन्ति ॥ तीर्थेन प्रविश्य पश्चाद्दर्शपौर्णमासिकाया वेदेर्निरसनोपवेशने कृत्वा प्रेषितोग्निप्रणयनीया अन्वाह । अभिहिंकृत्य । "प्रदेवं देव्याधिये"ति तिस्रः । आद्यां सप्रणवामुपांशु त्रिरन्वाह । तृतीयवचने प्रणवेनावसाय "अनुक्रस्य अग्निमनुव्रज नयमुष्मप्रदेवयुरि" त्याद्याः प्रतिपद्यते । "इडायास्त्वापदेवयमि" त्येका । "अग्नेविश्वेभिरि" त्येका ॥ अस्यां अर्द्धर्चे आरमेत् । निहितेग्नावप्रेषितः "कुलायिनमि" त्यर्धर्चे "सीदहोतरि" त्येतामुपसन्तनुयात् । "निहोताहोतृषदन" इति द्वे । उत्तमया परिधानीयया परिधाय प्रक्रमस्थाने निरसनोपवेशने कृत्वा "भूर्भुवःस्वरि" ति वाचं विसृजेत ॥ अथ ब्रह्मा अग्निप्रणयने क्रियमाणे तदा वाग्यमनं दक्षिणतश्च व्रजन् जपति "आशुःशिशान" इति सूक्तं समाप्य दक्षिणतोग्नेर्निरसनोपवेशने कृत्वा ब्रह्मजपं जपति । इति ब्रह्मत्वम् ॥ अथ हविष्पासन्नेषु होता मन्त्रितस्थानाचमने कृत्वा तीर्थेन प्रविश्य अग्निमन्थनादिपूर्वकं वैश्वदेववत्कुर्यात् । विशेषस्तूच्यते । आवाहने पूषान्तं वैश्वदेववदावाह्य । "इन्द्राग्नी आवह, मरुत आवह, वरुणमा० कमावह, देवां आज्यपामि" त्यादि । स्रुगादापने विशेषः । "घृतवतीमध्वर्युस्रुचमास्यैथां देवयुवं विश्ववारा" इति । घृतवतीपदस्य स्रुचमिति पदस्य च न ऊहः । अनर्थत्वात् । अत्र नव प्रधानदेवताः । अग्निः, सोमः, सविता, सरस्वती, पूषा, इन्द्राग्नी, मरुतः, वरुणः, कः इति । तत्राद्यानां पञ्चानां याज्यानुवाक्या वैश्वदेव्यामुक्ता । "इन्द्राग्नीअवसागतंश्नथद्वृत्रमि" तीन्द्राग्न्योः । "मरुतोयस्यहिक्षयेगाइवेदेचरमा"

इति मरुताम् । "इमम्मेवरुणतत्त्वायामी" ति वरुणस्य । "कयान-श्चित्रआभुवदूहिरण्यगर्भ" इति कस्य । वाजिनभक्ष उपवहयाचने प्रतिप्रस्थाता तृतीयो भवति । "वेदोसिवेदोविदीये" ति वेदद्वयं पत्न्यै प्रदाय वाचयेत् । "वेदौस्थौवित्तीस्थौविदेयकर्मणीस्थः करणेस्थः क्रियासंमनीस्थः सनितास्थः सनेयंघृतवन्तं कुलायिनंरायस्पोषं सहस्रिणं वेदौदत्तांवाजिनं यंबहवउपजीवन्ति योजनानामसद्रशौ तौविन्देय प्रजांविन्देय कामायवामि" ति । सर्वमन्यद्वैश्वदेव्या समानम् । आहवनीयद्वित्वेपि यद्येकवचनेन संप्रेषः क्रियते तदा आहवनीयाभिधायिनामूहः कर्तव्यः । यदापुन"रग्निभ्यां प्रणीयमानाभ्यामग्निभ्यां समिध्यमानाभ्यामि"ति द्विवचनयुक्तैषः क्रियते तदा ऋक्षु नोहः । अर्चं नोहेदित्युक्तत्वात् । निगदे तु आहवनीयाभिधायिनामूहः कर्तव्यः । स उच्यते । अग्ने महान्तौ स्थः ब्राह्मणभारतौ प्रवरोपि द्विवचनेनैव अभिधायकत्त्वात् वासिष्ठा मैत्रावरुणकौडिन्याविति । "देवेद्धौ मन्विद्धौ ऋषिष्टुतौ विप्रानुमदितौ कविशस्तौ ब्रह्मसंशितौ घृताहवनौ प्रणयौ यज्ञानां रथ्याव-ध्वराणां रथिनावि" ति केचित् । "अतूतौ होतारौतूर्णिहव्यवाहौ आस्यात्रेजुहौ देवानाचमसौ देवपानावरा इवाग्ने नेमिर्देवांस्त्वपरिभाकास्थ आवहतं देवान्यजमानाया अग्निमग्नआवहतमि "त्यादि । "आवहतं जातवेदसौसुयजायजेतमयाडग्निरग्नेः प्रियाधामानि यक्षतामग्नेर्होतुः प्रियाधामानियक्षतां स्वंमहिमानमेज्याइषः कृणुतां सोअध्वराजातवेदसौ जुषेतां हविरि"त्यादि । एवं तु पदमप्यूहेत् एवमप्याहवनीयम् । संस्थितायामवभृथं व्रजन्ति । तत्रावभृथेष्टिः कृताकृता उपरिष्टाद्वक्ष्यामः ॥ समाप्तो वरुणप्रघासः ॥ अथ द्वयोर्मासयोरैन्द्राग्नः ॥ तस्य प्रयोगस्तृतीयाध्याये वक्ष्यते ॥

अथ द्वयोर्मासयोः साकमेधाः ॥ तत्र पूर्वेद्युरग्नित्स इष्टयः ।

अनुमवनं पूर्वाह्णे अग्नये नीकवतेष्टिः। तत्रावाहने आज्यभागावावाह्य "अग्निमनीकवन्तमावह देवा आज्यपा" इत्यादि। वार्त्रघ्नावाज्यभागौ पञ्चमे "स्वाहाग्निं स्वाहा सोमं स्वाहाग्निमनीकवन्तं स्वाहा देवा" इत्यादि। "अनीकवन्तमूतय" इति कल्पजानुवाक्या। "सेनानीकेन सुविदत्र" इति याज्या। "प्रियाधामान्ययाडग्नेरनीकवतः प्रिया० अग्निरनीकवानिदं हविः"। पौर्णमासवदन्यत्॥ मध्यन्दिने। मरुद्भ्यः सान्तपनेभ्य इष्टिः॥ आवाहने आज्यभागावावाह्य "मरुतः सान्तपनानावह"। पञ्चमे प्रयाजे "स्वाहामरुतः सान्तपनान्स्वाहादेवा" इत्यादि। वृधन्वन्तावाज्यभागौ। "सान्तपनाइदं हविर्यो नो मरुतो अभिदुर्हणायु"रिति प्रधानस्य याज्यानुवाक्या। "प्रियाधामान्ययाण्मरुतांसान्तपनानांप्रि०मरुतः सान्तपनाइदं०पं०धं०क्रत"। पौर्णमासवदन्यत्॥ अपराह्णे मरुद्भ्यो गृहमेधेभ्य इष्टिः॥ आज्यभागप्रभृतीडान्ते स्थानाचमने कृत्वा आज्यभागौ यजति। नात्र स्रुगादापनम्। के चित्स्रुगादापनं कुर्वन्ति। "आग्निनारयिमश्नवद्वयस्फानोअमीवहे" ति पुष्टिमन्तौ आज्यभागोः पुरोनुवाक्ये। निखे याज्ये। प्रधानस्य "गृहमेधासआगतप्रतुध्न्यावईरतेमहांसी" ति याज्यानुवाक्ये। विराजौ संयाज्ये। अनिगदोत्र भवति। अनिगद इति वचनात्। "ये ३ यजामहेऽग्निंस्विष्टकृतमिमो अग्नेवीततमे" ति याज्या। पौर्णमासवदन्यत्॥ अथ यस्यां रात्र्यां गृहमेधीया संस्थिता तस्या उषःकाले पौर्णादर्वं भवति। तत्र यदि पूर्वकारिणो वषट्कारप्रदानं कुर्वन्तो होतारं चोदयेयुः तदा होता शुचिर्भूत्वा तीर्थेन प्रविश्य निरसनोपवेशने कृत्वा "पूर्णादर्वी" ति द्वे कल्पजे याज्यानुवाक्ये ब्रूयात्। याज्यायामिन्द्रं शतक्रतुमादिशेत्॥ अथ क्रीडिनेष्टिः॥ मरुतः क्रीडिनो देवताः। आवाहने आज्यभागावावाह्य "मरुतः क्रीडिनआवह स्वाहा

मरुतः क्रीडिनः स्वाहे" त्यादि । "उतव्रुवन्तुजन्तवोयंक्रन्नुरगृभीत" इति परोक्षवात्रेग्न्योराज्यभागयोः पुरोनुवाक्ये । नित्ये याज्ये । "क्रीडंवः शर्द्धोमारुतमत्यामोनयेमरुतः स्वंच" इति प्रधानस्य याज्यानुवाक्ये । "जुष्टोदमूनाअग्नेशर्द्धमहतेसौभगाये" तिमंयाज्ये । "प्रियाधामान्ययाणमरुतांक्रीडिनांप्रियाधामे" त्यादि० "जुषतांहविरग्नेशर्द्धमहते" ति याज्या । "मरुतः क्रीडिन इदंहविः" । पौर्णमानवदन्यत् ॥ अथ माहेन्द्रीष्टिः ॥ सा वरुणप्रघासेन व्याख्याता । विशेषस्तूच्यते । अष्टौ प्रधानदेवताः । अग्निः, सोमः, सविता, सरस्वती, पूषा, इन्द्राग्नी, इन्द्रो, वृत्रहेंद्रो, महेन्द्रो, वेति तिसृणां विकल्पः । विश्वकर्मा चेत्यष्टौ । इन्द्राग्नीपर्यन्तानां वरुणप्रघासे आवाहनमुक्तम् । "तइन्द्रमावह वृत्रहेन्द्रमावह महेन्द्रमावह" । त्रयाणां मध्ये अन्यतमः । "विश्वकर्माणमावह देवांआज्यपां" इत्यादि । उत्तमे प्रयाजे ऐन्द्राग्नपर्यन्तं वरुणप्रघासवत् । "स्वाहेन्द्रंस्वाहावृत्रहेन्द्रंस्वाहामहेन्द्रं" वा । "स्वाहाविश्वकर्माणं३० स्वाहा" इत्यादि । वार्त्रघ्नावाज्यभागौ । प्रधानस्य ऐन्द्राग्नपर्यन्तानां षण्णां वरुणप्रघासे उक्ता याज्यानुवाक्याः । इन्द्रस्य याज्यानुवाक्ये तु दर्शे उक्ते । महेन्द्रस्य च । "आतूनइन्द्रवृत्रहंननुतेदायिमहइन्द्रियाये" ति वृत्रहेन्द्रस्य । "विश्वकर्मन्हविषावावृधानो यातेधामानिपरमाणियावमे" ति विश्वकर्मणः । स्विष्टकृतः इन्द्राग्नान्तं वरुणप्रघासवत् । याडिन्द्रस्य वृत्रहेन्द्रस्य महेन्द्रस्य वा० यान्हविश्वकर्मणः । सूक्तवाके ऐन्द्राग्नान्तं वरुणप्रघासवत् । "इन्द्र इदं० वृत्रहेन्द्र इदं० महेन्द्र इदमि" ति वा । "विश्वकर्मा इदं ह०" । वाजिनावभृथवर्जं वरुणप्रघासवदन्यत् । स्रुगादापनवेदग्रहणपत्नीवाचनानि प्रकृतिवत् ॥ दक्षिणाग्नेरग्निमतिप्रणीय पित्र्या ॥ तस्मिन्नेवाग्नौ दक्षिणाग्नौ वा पित्र्या नामेष्टिः कर्त्तव्या । सा शंख-

न्ता सर्वत्र उपांशु प्रयोज्या। आगुरादय उच्चैरेव। आवाहनादिमन्त्रस्वराणि जपलोपे भवन्ति। होतावभृथवषट्कारानुमन्त्रणाभिहिङ्कारवर्जम्। अत्र जपशब्द उपांशुत्वधर्माधिकमन्त्रोपलक्षणार्थः। वषट्कारानुमन्त्रणस्य जपत्वाभावप्रतिपेधात्। तत्तूपांशु प्रयोज्याः सर्वे मन्त्रा लुप्यन्ते। यानि प्राङ्मुखानि तानि दक्षिणामेव प्राचीं कृत्वा कर्त्तव्यानि॥ अथ होता मन्त्रिनः स्थानाचमनं कृत्वा अनिप्रणीतविहारं दक्षिणाग्निविहारं वा तीर्थेन वेदिश्रोण्योत्तरयेत्येवमादि कृत्वा प्रेषितोऽभिहिङ्कृत्य "उशंतस्त्वानिधीमहि" त्येतामृचं त्रिरनवानमन्वाह। ताः सामिधेन्यस्तासामुत्तमेन प्रणवेन "आवहदेवान् पितृन्यजमानाये"ति निगदमुपसन्तनोति। अथो "दग्नेमहाँ असी"त्येवमादिनिगदस्यार्षेयस्य च लोपः। अस्यामिष्टौ देवाः पितरश्चेज्यन्ते इति देवशब्दवत्सु मन्त्रेषु देवशब्दानन्तरं पितृशब्दं ब्रूयात्। देवशब्दं केवलं न ब्रूयात्। "इडामहदेवान् पितृनीडेन्याञ्नमस्वा" इति। "इदं मेदेवाः पितरोहविर्जुषन्तामि"त्येवमादिषु अर्थात्प्राप्तस्य प्रतिपत्तिवाक्यगो नियमार्थः अतः प्रतिपत्ति वाक्यादन्यत्र पितृशब्दो न प्रयोक्तव्य इत्येके मन्यन्ते। "आवहदेवान् पितृन्यजमानाये" ति अवमाय आज्यभागावावाह्य "पितृन्त्सोमवत आवह" अथ वा "सोमंपितृमन्तमावह"। अनयोर्विकल्पः। "पितृन् बर्हिषदः आवह पितृनग्निष्वात्तान् आवह"। यमपक्षे "यममावह" वैस्वतपक्षे "वैवस्वन्तमावह देवा आज्यपा आवह"। अग्निहोत्रायेत्यस्य स्थाने "अग्निंकव्यवाहनमावह आवहजातवेदः सुयजायजे"त्यावाहनम्। अत ऊर्ध्वं प्रादेशादि लुप्यते। सीदहोतरित्युक्तः तूष्णीं होतृसदनमेवस्य तूष्णीं निरसनोपवेशने करोति। मन्त्राणां क्रियाविशेषणत्वान्मन्त्रलोपेपि न क्रियालोपः। तूष्णीं जानुशिरसा बर्हिरुपस्पृश्य स्रुगादापनमाह बर्हिर्वर्जं चतुरः प्रयाजान्यजति।

उत्तमे प्रयाजे “ये स्वाहाग्निं स्वाहासोमंस्वाहापितॄन्त्सोमवतः स्वाहा सोमंपितृमन्तं वा स्वाहा पितॄन्बर्हिषदः स्वाहा पितॄनग्निष्वात्तान्” यमश्चेत्तदा “ स्वाहायमं” वैवस्वतश्चे“त्स्वाहावैवस्वतस्वाहा अग्निंकव्यवाहनं स्वाहा देवा” इत्यादि । “अनो अग्नेसुचेतुनात्वं सोममहेभगमि”ति जीवातुमतोराज्यभागयोः पुरोनुवाक्ये । नित्ये याज्ये ॥ अथ होता ब्रह्मा च सव्योत्तर्युपस्थौ प्राचीनावीतिनौ हविर्भिश्चरतः “उदीरतामवरउत्परासस्त्वयाहिनः पितरः सोमपूर्वे” इति द्वे अनुवाक्ये पितॄणां सोमवताममनवानमुक्त्वा शिष्टेनार्द्धर्चेन प्रणुयात् । अध्वर्युणा “स्वधे”ति प्रेषितः होता “ये स्वधामहे”इत्यागूर्य “ये स्वधेति” वा आगूर्य देवतामादिश्य “उपहूताः पितरः सोम्यास”इति याज्यामुक्त्वा “स्वधानम”इति । नित्याः प्लुतयः । एवमेवेतरेषामपि द्वे द्वे अनुवाक्ये तृतीया याज्या । “त्वं सोम प्रचिकितोमनीषामोमोधेनुमि”त्यनुवाक्या । त्वं सोमपितृभिः संविदान”इति याज्या । “सोमस्यापितृमतः बर्हिषदः पितरआहं पितॄनि”त्यनुवाक्ये । “इदं पितृभ्योनमो अस्त्वद्ये”ति याज्या पितॄणां बर्हिषदाम् । “अग्निष्वात्ताः पितरोगे चेहे” त्यनुवाक्या । “ ये अग्निदग्धा” इति याज्या पितॄणामग्निष्वात्तानाम् । यमपक्षे “इयमप्रस्तरमि” ति द्वे अनुवाक्ये । “परेयिवांसमि”ति यमस्य याज्या । वैवस्वतस्याप्येष एव । अयं तु विशेषः । आद्योत्तमे अनुवाक्ये मध्यमा याज्या । “येतानूपुर्देवत्राजेहमानात्वदग्नेकाव्यात्वन्मनीषा” इत्यनुवाक्या । “ स प्रत्नष्वे”ति याज्या अग्नेः कव्यवाहनस्य । निगदोत्र न भ भवति । आवाहनेपि पित्र्यायां पशाविति वचनात् । आगूर्याग्निं कव्यवाहनमादिश्य यजेत् । अतः प्राकृतोपस्थं सव्यं चोभयोः तूष्णीं पर्वाञ्जनम् इडा प्रकृत्या भवति । प्रकृत्यात ऊर्ध्वमिति वचनात् । इडानिगदे उपांशुप्रयोज्यलोपं केचिदिच्छन्ति ।

यदि अध्वर्यवो वषट्कारक्रियां कुर्वन्ति तदा आज्यभागाभ्यामूर्ध्वं प्रकृत्या भवति । वषट्कारक्रियायां चोर्ध्वमाज्यभागाभ्यामिति वचनात् । उभयथापि जपादिलोपस्तुल्य एव । अन्यन्मन्त्रलोपादिति वचनात् । वषट्कारक्रियापक्षे एकैकानुवाक्या । मध्यमा उद्धरेत् । "यो अग्निः कव्यवाहनस्त्वमग्न ईडितो जातवेद" इति संयाज्ये । अनिगदे एव । अथेडामुपहूयावान्तरेडां प्राणभक्षं भक्षयित्वा बर्हिष्यनुप्रहरेयुः । इडाभक्षणं चात्र नास्ति । न वा मार्जनम् । बर्हिवर्जं द्वावनुयाजौ यजति । सूक्तवाके "अग्निरिदं० सोम इदं० पितरः सोमवन्त इदं० वन्ता० धन्तः क्रत० मोमः पितृमानिदं० क्रते"ति वा । "पितरोबर्हिषदः इदं० जुषन्ता० न्धन्त० क्रत० पितरोग्निष्वात्ता इदं० पं० धं० क्रत० यमइ० क्रते"ति यमपक्षे । वैवस्वतपक्षे "वैवस्वत इदं० क्रत अग्निः कव्यवाहनइ० क्रत देवाआज्यपा क्रत अस्यामृधे" त्यादि । न चात्र नामादेशः । शंयुवाकः प्रकृत्या । एतदन्ता पित्र्येष्टिः ॥ संस्थितायां प्रागनुयाजाभ्यां दक्षिणावृद्भूत्वा दक्षिणाग्निमुपतिष्ठते "अयाविष्ठ" इत्यनेन मन्त्रेण । अनतिप्रणीतपक्षे अनावृत्यैवोपस्थानं भवति । तथास्थितस्यैवाभिमुखसम्भवात् । उभयोरपि पक्षयोरावृत्यैव गार्हपत्याहवनीयावुपतिष्ठेत । "सुसंदृशंत्वे" ति आवहनीयम् । "अग्निन्तमन्य" इति गार्हपत्यम् । "माप्रगामाग्नेत्वंन्न" इति षट्कचतुष्के जपन्त एनं गार्हपत्यं गच्छन्ति पूर्वेण गार्हपत्यं सूक्ते समापयन्ति । यदि प्रागनुयाजादेव उत्थानं तदा सव्यावृतोनुयाजादि कुर्यात् । यदि संस्थितायां तदा सव्यावृतः सञ्चारार्थं व्रजति । तदाध्वर्यवो यदुपदिशन्ति तत्कर्तव्यम् ॥ अथ पित्र्याब्रह्मत्वम् ॥ ब्रह्मा शुचिर्भूत्वा दक्षिणाग्निविहारं प्रविश्य वृतो दक्षिणेनातिप्रणीतं गत्वा तूष्णीं निरसनोपवेशने करोति । ब्रह्म-

जपश्चात्र न भवति । लुप्तजपत्वात् । प्रणीतासर्जनादिषु जपाः सर्वत्र न भवन्ति । अतिसर्जने प्रणयेदित्यादि अतिसर्जननामेव भवति । अथ प्राशित्रावेक्षणं तूष्णीमेव गृह्णाति । तूष्णीमेव प्राग्दण्डं निदधाति । अङ्गुष्ठोपकनिष्ठिकाभ्यां गृहीत्वा तूष्णीमवघ्राय बर्हिष्यनुमहरेत् । तूष्णीमन्वाचामति । प्राशित्रप्रक्षालनमभ्यात्ममपां निनयनं नेडाया भक्षणं न मार्जनं च । " ओंप्रतिष्ठ "ति समिधमनुजानीत । न च पूर्वो जपः । ततः संस्थितायां सर्वप्रायश्चित्तानि समन्त्रकाणि जुहुयात् । संस्थितायां प्राग्वानुयाजाभ्यामग्न्युपस्थानादि कुर्यात् । ततः संस्थाजपं करोतीति विशेषः । समाप्ता पित्र्या ॥ त्र्यम्बकेभ्यः प्रत्येत्य आदित्येष्ट्या चरन्ति ॥ तस्यां धाय्ये विराजौ । आज्यभागावावाह्य " अदितिमावह देवांआज्यपामि " त्यादि । " स्वाहादिनिम्बाहे " ति । पञ्चमे प्रयाजे " अग्निनारयिमश्नवदुगयस्फानोअमीवहे " ति पुष्टिमतोराज्यभागयोः पुरोनुवाक्ये । नित्ये याज्ये । " उतत्वामदितेमहिमहीमूषुमातरमि " ति प्रधानस्य । " मेद्धाअग्ने० प्रियाधामान्यया‌ऽदित्याः प्रियाधा० हविरिमोअग्ने" इति याज्या । " अग्निरिदं० सोमइदं० अदितिरिदं० देवाआज्यपा " इत्यादि । पौर्णमासवदन्यत् । अनीकवतेष्टीरारभ्य एतदन्ताः साकमेधा उच्यन्ते ॥ समाप्ताः साकमेधाः ॥

अथ पञ्चम्यां पौर्णमास्यां शुनासीरीयेष्टिः कार्या ॥ तस्यां वैश्वदेववत्कल्पः । विशेषस्तूच्यते । दश प्रधानदेवताः आपस्तंबोक्ताः अग्न्यादिषु पूषान्ताः पञ्च । इन्द्राग्नी विश्वेदेवा इन्द्रः शुनासीरः वायुः सूर्य इत्येताः पूषान्ताः । वैश्वदेव्यामुक्ता याज्यानुवाक्या । इद्राग्न्योर्वरुणप्रघासे उक्ते । " विश्वेदेवासआगतयेकेचज्मे " ति विश्वेषां देवानाम् । " इद्रंवयंशुनासीरमि " ति क-

ल्पजानुवाक्या । " अश्वायन्तोगव्यन्त " इतीन्द्रस्य शुनासीरस्य याज्या । " सत्वंनोदेवमनसेशानस्यप्रहुतिमि " ति वायोः । " तरणिर्विश्वदर्शतश्चित्रन्देवानामि " ति सूर्यस्य अत्र सूर्य उपांशु । स्वपक्षे अष्टौ देवताः । वायुर्नियुत्वान्वायुर्वा पष्ठः । शुनासीरौ इन्द्रो वा शुनासीरः । इन्द्रो वा शुनः एतेषां त्रयाणामन्यतमः । सूर्योऽष्टमः । पृषान्तानामुक्तयाज्यानुवाक्याः । " आवायोभूषशुचिपा उपनः प्रयाभिर्यासिदाश्वांसमच्छे " ति वायोर्नियुत्वतः । केवलवायुसूक्ते । शुनासीराविमांवाचञ्जुपेथांशुनंनः फालाविकृपन्तुभूमिमि " ति शुनासीरयोः । इन्द्रस्य शुनासीरस्योक्ते । "शुनानंहुवेमघवानमिन्द्रमश्वायन्तोगव्यन्तोवाजयन्त " इतीन्द्रस्य शुनस्य । सूर्यस्योक्ते वाजिनवर्जमन्यद्वैश्वदेववत्कुर्यात् । समाप्य चातुर्मास्यानि सोमेन यजेत । अशक्तावैन्द्राग्नेन पशुना । अथ वा पुनश्चातुर्मास्यानि प्रयोक्तव्यानि । पुनः प्रयोगपक्षे न वैश्वानरपार्जन्यावभ्यसेत् ॥ चातुर्मास्याङ्गपशुकरणादशक्तस्य सवनीयेष्टिर्बौधायनोक्ता ॥ तत्राग्निरिन्द्रो विश्वेदेवा देवता । " अग्निर्मूर्द्धाभुवोयज्ञस्ये " त्यग्नेः " ऐन्द्रसानसिंरयिंसजित्वानं सदासहम् " इतीन्द्रस्य । " विश्वेदेवासोयेकेचज्मामहिनोअहिमाये " ति विश्वेषां देवानाम् । तत्र श्लोकः । चातुर्मास्येषु सर्वेषु श्रथद्वृत्रं प्रयोजयेत् । ऐन्द्राग्नस्य मरुत्पक्षे "मरुतो यस्यहि क्षये" ॥

इति मञ्चनार्यभट्टविरचितायामाश्वलायनसूत्रप्रयोगदीपिकायां द्वितीयोऽध्यायः ॥

अथ पाशुकं चातुर्मास्येषु ॥ कपिलपक्षे प्रयोगः उच्यते । तत्रायं विशेषः । पूर्ववद्वैश्वानरपार्जन्यौ । प्रातर्वैश्वदेवपर्वणि अग्निप्रणयनं भवति । परिधौ पशु नियुञ्जति । तत्र परिव्ययणीय प्राह " युवासुवासा " इति । स्थानान्तमने कृत्वा अग्निमन्थनं

भवति । सामिधेनीषु द्वे धाय्ये आवपेत । आवाहने विशेषः । "अग्निमग्नआवह सोममावह अग्निमावह सोममावह सवितारं३०आवह सरस्वतीमावह पूषणमावह मरुतःस्वतवसआवह विश्वान्देवानावह वनस्पतिमावह द्यावापृथिवी३०आवह देवांआज्यपामि" त्यादि । संमार्गैः सम्मृज्य प्राकृताहुतीर्जुहुयात । "जुष्टोवाच" इत्यादि हुत्वा "प्रशास्तः तीर्थेनप्रपद्यस्वे" ति प्रशास्तारं प्रपाद्य "मित्रावरुणयोरि" ति मन्त्रेण दण्डदानम् । मैत्रावरुणोपि दण्डं प्रतिगृह्य "भूयासमि" त्यन्तेन उत्तरेण होतारमतिव्रजेदक्षिणेन दण्डं हरेन्न चानेन संस्पृशेदात्मानं वान्यं वा प्रैषवचनात । दक्षिणो होतृषदनात्प्रह्वोवस्थाय वेद्यां दण्डमवष्टभ्य ब्रूयात्प्रैषान् । अथ होता होतृषदनाभिमन्त्रणादि स्रुगादापनान्तं कृत्वा एकादश प्रयाजान्यजति । मैत्रावरुणेन होता "यक्षदग्निंसमिधे" त्यादि प्रेषतः प्रेषितो होता प्रैषमाप्रीभिर्यजति । प्रैषलिङ्गाभि ऋग्भिः । "समिद्धोअग्ने" ति ऋष्युक्तपक्षेणाप्रीर्ज्ञातव्याः । दशप्रयाजानिष्ट्वा "पर्यग्नये" ति प्रेषितो मैत्रावरुणोनभिहिंकृत्य "अग्निर्होतान" इति तृचमन्वाह । आद्योत्तमे त्रिर्ब्रूयात । पुनः प्रेषितो "जेदाग्नि" रित्युपप्रैषं ब्रूयात् । प्रैषमुक्त्वा अन्तर्वेदि दण्डं निदध्यात् । अथ होता अध्रिगुप्रैषं ब्रूयात । "दैव्याः शमितार०मेधपतिभ्योमेधंप्रास्माअग्निमि" त्यादि । दक्षिणावृदावर्तते मैत्रावरुणश्च । संज्ञप्ते पश्चादावर्तेत । "मैत्रावरुणस्तोकेभ्योनुब्रूही" ति प्रेषितः । "जुषस्वसप्रथस्तममि" त्येका । "इमन्नोयज्ञमि" ति पञ्चर्चं सूक्तमाद्योत्तमे त्रिः । अथ होता तस्मिन्नेवासने पुनर्निरसनोपवेशने कृत्वोपविशति । ततः पुनः स्रुगादापनमाह "होतायक्षदग्निंस्वाहे" ति प्रेषितः । उत्तमाप्री याज्या । सप्रैषपक्षे "अग्निर्वृत्राणि त्वंसोमासी" ति आज्यभागयोः पुरोनुवाक्ये । मे-

त्रावरुणो ब्रूयात्। "होतायक्षदग्निमाज्यस्य जुषतामि" ति अग्नेः प्रैषः। "होतायक्षत्सोममाज्यस्ये" ति सोमस्य। "होता० ये० जुषाणोअग्निराज्यस्ये" ति याज्याग्नेः। "ये० जुषाणः सोमआज्यस्य हविष" इति सोमस्य। यजप्रैषपक्षे होतैव पौर्णमासवदाज्यभागौ यजति। अथ प्रधानानाम्। "अग्निर्मूर्द्धा भुवोयज्ञस्ये" त्यग्नेः। "सोमयास्तेमयोभुवऊतयः सन्तिदाशुषे" इति सोमस्य। "आविश्वदेवंसत्पतिंवामम्ये" ति सवितुः। "पावकानः सरस्वतीयाजीविवाकिन्याचित्रायुरि" ति सरस्वत्याः। "पूषन्तवव्रतेवयंशुक्रन्तेअन्यद्यजतन्तेअन्यदि" ति पूष्णः। "इहेहवस्वतवसः सचित्रमर्कंगृणतेतुराये" ति मरुतां स्वतवसाम्॥

अथ वैश्वदेवः पशुः॥ वदनु मासुपाया आमिक्षायाश्च सह प्रदानम्। "विश्वेअद्यमरुत" इति पुरोनुवाक्या। "मैत्रावरुणहोतायक्षद्विश्वान्देवानामिक्षायाउक्षागस्यवपायामेदसोजुषन्तां हविर्होतर्यज विश्वेदेवाः शृणुते महवंम" इति होता यजति। चात्वाले मार्जयित्वा द्यावापृथिवीभ्यां यजति। "महीद्यौः पृथिवीचनः प्रपूर्वजेपितरानव्यसोभिरि" ति याज्यानुवाक्ये। ततः स्विष्टकृदादीडान्तं कुर्यात्। अथ वैश्वदेवेन पशुपुरोडाशेन यजति। "आनो देवानामुपवेतुशंस" इति पुरोनुवाक्या। मैत्रावरुणः "होतायक्षद्विश्वान्देवान्पुरोडाशस्यजुषन्तांहविर्होतर्यजे" ति प्रेषितः। "येके-चज्मामहिन" इति यजति होता। स्विष्टकृति "इडामग्न" इति पुरोनुवाक्या। "मैत्रा० होतायक्षदग्निपुरोडाशस्यजुषतांहविर्होतर्यजे" ति प्रैषः। "स्वदस्वहव्ये" ति यजति होता। तदिडाभक्षणम्॥ अथ हविर्योगः॥ अथ मनोतायै संप्रेषितो मैत्रावरुणः अनभिहिंकृत्य "त्वंह्यग्नेप्रथमोमनोते" ति सूक्तं त्रयोदशर्चं सूक्तमन्वाह। आद्योत्तमे त्रिः। "आनोविश्वआस्क्रागमंतु

देवा" इति पुरोनुवाक्या । "होतायक्षद्विश्वान्देवांश्च्छागस्यहविष आदन्नद्यमध्यतोमेदउद्धृतंपुराद्वेषोभ्यः पुरापौरुषेय्यागृभः घसन्नूनंघासेअज्राणां यवसप्रथमानांसुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः श्रितामतउत्सादतोङ्गादङ्गादवत्तानांकरन्नेवविश्वेदेवाजुषंतां हर्विर्होतर्यज" इति प्रैषः । "अग्नेयाहिदूत्यंमारिष" इति याज्या । अस्या अर्धर्चे आरमेत् । वसाहोमान्ते "सरस्वतीमरुत" इत्यर्धर्चेन यजति । ततो वनस्पतियागः । "देवेभ्योवनस्पत" इत्यनुवाक्या । "होतायक्षद्वनस्पतिं॰भित यत्राग्नेराज्यस्यहविषः प्रियाधामानियत्रसोमस्याज्यस्यहविष॰नियत्रविश्वेषांदेवानां च्छागस्यहविषः प्रिया॰ नियत्र वनस्पतेः प्रियापाथांसियत्रदेवानामाज्यपा॰ नियत्राग्नेर्होतुः प्रि॰नितत्रेतन्प्रस्तुयसइ॰ वनस्पतिर्जुषतां हविर्होतर्यजे" ति प्रैषः । "वनस्पतेरशनयानियूपे"ति याज्या । अथ स्विष्टकृतः "यिप्रीहिदेवां"इत्यनुवाक्या । "होतायक्षदग्निंस्विष्टकृतमयाडग्निरग्नेराज्यस्यहविषः प्रियाधामान्ययाट्सोमस्याज्यस्यहविषः प्रि॰द्विश्वेषान्देवानां"च्छागस्यहविषः प्रि॰ द्वनस्पतेः प्रियापाथांस्ययाड्देवानामि" त्यादि॰ जुषतांहविर्होतर्यजेति । "अग्नेयदद्यविशोअध्वरस्ये" ति याज्या । तत इडावान्तरेडाप्राशनं च । तत एकादशानुयाजाः । तेषां "देवंबर्हिरि" त्यादयः प्रैषाः । सूत्रोक्ता याज्या एकादश । अथ सूक्तवाकप्रैषः । "अग्निमद्यहोतारमवृणीतायंयजमानः पचन्पुरोडाशंगृह्णन्नग्नयआज्यंगृह्णत्सोमायाज्यंबध्नन्विश्वेभ्योदेवेभ्यश्च्छागंसूपस्था अद्यदेवोवनस्पतिरभवदग्नयआज्येनसोमायाज्येनविश्वेभ्योदेवेभ्यश्च्छागेनाक्षंस्तन्मेदमस्तप्रतिपचताग्रभीपुरवीवृधन्नपुरोडाशेन त्वामद्यर्षआर्षेयऋषीणां नपादवृणीतायं यजमानोबहु॰भ्र॒ ३ हि इदन्द्यावापृथिवी" त्यादि । "अ-

ग्निरिदं० सोमइदं० अग्निरिदं० सोमइदं० सावित्राउ० इदं० सरस्वतीदं० पूषेदं० मरुतःस्वतवसइदं० विश्वेदेवाइदं० द्यावापृथिवी इदं० देवाआज्यपा" इत्यादि शंयुवाकान्तम् । अनुयाजानां सूक्तवाकस्य शंयुवाकस्य वोपरिष्टाद्वाजिनयागो भवति । ततः पत्नीसंयाजादिप्रायश्चित्तान्तं कृत्वा हृदयशूलावभृथसंस्थाजपं करोति ॥ इति सपशुचातुर्मास्येषु वैश्वदेवपर्व समाप्तम् ॥

अथ वरुणप्रघासे विशेषः ॥ स वक्ष्यते । तत्राग्निप्रणयनम् । तत्र केचिदध्वर्यव एकवचनान्तं प्रैषं प्रयुञ्जन्ति । केचिद्द्विवचनान्तम् । उभयत्राप्यग्निप्रणयने न कश्चिद्विशेषः । द्विवचनपक्षे तु "अग्ने महां असी"त्याहवनीयाभिधाने ऊहो विशेषः । अथ यूपाञ्जनम् । अग्निमन्थनम् । " नमः प्रवक्त्र" इति जपः । सामिधेनीषु धाय्ये भवतः । आवाहने आज्यभागावावाह्य अग्न्याद्याः पञ्चदेवता आवाह्य " इन्द्राग्नी आवह मरुत आवह वरुणमावह वनस्पतिमावह कं उ० आवह देवा आज्यपामि"त्यादि । संमार्गैः संसृज्य प्रवृत्ताहुतीर्जुहोति । स्रुगादापने ऊहः । " घृतवतीमध्वर्यूस्रुचमास्येथां देवयुवं विश्ववारा" इति । प्रयाजादि वैश्वदेववत् । अध्रिगौ तु विशेषः । "दैव्याः श० मेधपतिभ्यांमेधं प्राभ्यामग्निभरत त्वेनोमाता उदीचीमानयोः पदो० पृथिवीमशरीरे एकै० कैकधानयोस्त्वचावाप्स्यतात्पुरात्पुरानाभ्याअपि शसोवपेउत्स्विदतादन्तरन्तरेवोष्माणं वारयध्वात् श्येनमनयोर्वक्षभीकृणुतात्प्रशस्याबाहुंच्छलादोषाणिकश्यपे वांमानाच्छिद्राः श्रोणीकवषोरूत्स्रेकपर्णाष्ठीवन्तापड्विंशतिः षड्विंशतिरनयोर्विक्रयस्ता अनुष्ठ्याबाच्यावयनादृगात्रङ्गात्रमनयोरनूनं कृणुतात् उव० तान् अस्नारं तान्० वनिष्टुजनयोर्मा गाविष्टोरुकंमन्यमानानद्रस्तोकत० तारः अध्रि० अपशमितायेव तान्" द्वयोर्वपयोः श्रप्यमाणयोः स्तोक सूक्तं सकृत्

स्रुगादापनं स्वाहाकृतिप्रैषः । उत्तमाप्री याज्या । आज्यभागादि पूषान्तं वैश्वदेववत्कर्म भवति । तत "इन्द्राग्नीअवसागतं श्नथद्वृत्रमुतसनोतिवाजमि" तीन्द्राग्न्योर्याज्यानुवाक्ये । अथ दक्षिणे विहारे प्रतिप्रस्थातुर्मारुती मेषी भवति । तदनु वपाया आमिक्षायाश्च सह प्रदानम् । "शुचीवोहव्यामरुतः शुचीनामि" ति अनुवाक्या । "होतायक्षन्मरुत आमिक्षायामेष्यावपायामेदसोजुषन्तां हविर्होतर्यजे" ति प्रैषः । "प्रचित्रमर्कंगृणतेतुराये" ति याज्या इति वपायाः । अथोत्तरे विहारे अध्वर्योर्वारुणो मेषो भवति । "अवासिन्धुंवरुणोद्यौरिवस्थादि" त्यनुवाक्या । "होतायक्षद्वरुणमामिक्षायामेषस्य वपायामेदसोजुषतां हविर्होतर्यजे" ति प्रैषः । "तत्वायामिब्रह्मणावन्दमान" इति याज्या । इति वपायागः । चात्वाले मार्जयित्वा कायेनैककपालेन यजति । "कयानश्चित्रआभुवद्धिरण्यगर्भः समवर्त्तताग्र" इति याज्यानुवाक्ये । स्विष्टकृदादीडान्तं वैश्वदेववत् । अथानन्तरं पशुपुरोडाशाभ्यां प्रचरन्ति । "नृष्टिरंमरुतोवीरवन्तमि" त्यनुवाक्या । "होतायक्षन्मरुतः पुरोडाशस्यजुषन्तां० यजअराइवेदचरमाअहेवे" ति याज्या इति मरुतां पुरोडाशस्य । अथ वारुणस्य पुरोडाशस्य । "अयंसुनुभ्यंवरुणस्वधाव" इत्यनुवाक्या । "होतायक्षद्वरुणं पुरोडाशस्यजुषतां हविर्होतर्यज तद्धिनक्तन्तद्दिवे" ति याज्या । इति वारुणस्य । अथ स्विष्टकृत । "इडामग्ने" इत्यनुवाक्या । "होतायक्षदग्निपुरोडाशयोर्जुषतांह० यज स्वदस्वहव्य" ति याज्या । इडाभक्षणम् । अथ हविर्यागः । मनोता पूर्ववत् । "आवोहोताजोहवीतिसत" इत्यनुवाक्या । "होतायक्षन्मरुतोमेष्याह्विषआदन्नद्यमध्यतो० घर्मंनूनं करन्नेवमरुताजुषन्तां यज यावः शर्मशशमानायसन्ती" ति याज्या । अस्या अर्द्धर्चे वसाहोम आ-

रमेत्। इति मरुताम्। अथ वरुणस्य। मनोता पूर्ववत्।" एवा-वन्दस्ववरुणं बृहन्तमि" त्यनुवाक्या। "होतायक्षद्वरुणंमेषस्य हविषआददग्रमध्यतोमेदउद्धृतं० घर्मन्नूनंद्यां० करदेवं वरुणोजु-षतां हविर्होतर्यजत अस्तम्भाद्यामसुरोविश्ववेदा" इति याज्या। वसाहोमार्थमारभेत्। इति वरुणस्य। वनस्पतियागादिप्रायश्चित्तं समानं वैश्वदेवेन व्याख्यातम्। तत्र वनस्पतिप्रैषे विशेषः। "होतायक्षद्वनस्पति० तत्रसोमस्याज्यस्य० यत्रमरुतां मेष्याहविषः प्रि० यत्रवरुणस्यमेषस्यहविषः प्रियाधाम० यत्रवनस्पतेः प्रिया-पाथांसि यत्रदेवानामाज्यपानामि"त्यादि०। तत्र तौ मस्तु० इभीयमावित्रकृत्वीकरदेवं देवोवनस्पतिर्जुषतां हवि०। स्विष्टकृ-त्प्रैषे विशेषः। "होतायक्षदग्निंस्विष्टकृतमयाडग्निरग्नेराज्यस्य ह-विषः० ण्मरुतां मेष्याहविषः प्रिया० वरुणस्य मेषस्य हविषः प्रिया० डूनस्पतेः प्रियापाथांस्ययाड्देवानामि"त्यादि० होतर्यजे। अथ सूक्तवाकप्रैषः। "अग्निमद्य० पुरोडाशौ गृह्णन्नग्नय आज्यं गृह्णत्सोमायाज्यं बध्नन्मरुद्भ्योमेषींबध्नन्वरुणायमेषं सूर्यस्याज्येन म-रुद्भ्योमेष्यां वरुणायमेषेणाक्षस्तौमेद० भीपुरवीवृधन्तपुरोडाशा-भ्यांस्त्वामुद्ये" त्यादि०। अथावभृथेष्टिहृदयशूलादिसंस्थाजपान्तं समानम्। तत्र विशेषः। "शुचौस्थोयोस्मान्द्वेष्टियंचवयन्द्विष्मस्त-मभिशोचतम्"। एवं वारुणप्रघासिकर्म समाप्तम्॥

अथ साकमेधा उच्यन्ते॥ तत्र आमाहेन्द्याः प्रकृतिवादिष्टयः। अथ माहेन्द्री। तस्या वरुणप्रघासवत्कर्म भवति। तत्रायं विशे-षः। "अग्निमग्नआवह सोमावह"। ऐन्द्राग्नान्तं वरुणप्रघासव-त् आवाह्य "इन्द्रंवृत्रहणमावह वनस्पतिमावह विश्वकर्माणंउ० आवह देवांआज्यपामि" त्यादि समानम्। अध्रिगौ विशेषः। मे-धपतयेमेधमाज्यभागादि ऐन्द्राग्नान्त० वरुणप्रघासवद्यागः। तत

इन्द्रस्य वृत्रघ्नश्चरोर्वपायाश्च सह प्रदानम् । "अभिक्रत्वेन्द्रभूरध-ज्मन्नि" त्यनुवाक्या । "होतायक्षदिन्द्रवृत्रहणंचरोश्छागस्यवपाया मेदसोजुपतामि" ति प्रैषः । "सहदानुंपुरुहूतक्षियन्तमि" ति याज्या । मार्जयित्वा वैश्वकर्मणैककपालेन यजति । "विश्वकर्मन्ह-विषावाट्टधानोयातेधामानिपरमाणियावमे"ति याज्यानुवाक्ये । स्विष्टकृदादीडान्तं पूर्ववत् । अथ पुरोडाशयागः । "त्वं महा इन्द्र-तुभ्यंहक्षा"इत्यनुवाक्या । "होतायक्षदिन्द्रवृत्रहणं पुरोडाशस्यजुपतां हविर्होतर्यज स्तुत इन्द्रे"ति याज्या । अथ स्विष्टकृदादिकर्म भवति । अथ हविर्यागः । मनोता । " सत्राहणं दाधृषिन्तुम्नमिन्द्रामि"त्य-नुवाक्या । "होतायक्षदिन्द्रवृत्रहणं छागस्य हविष आदद्यमध्य-तोमेदउद्भृतं० पुरान्नूनं० करदेवमिन्द्रोवृत्रहाजुपतां हविर्होतर्यज एवावस्त्वइन्द्रः सत्यः सम्राडि" ति याज्या । वसाहोमः । अथ वनस्पतिप्रैषः । " यत्रेन्द्रस्यवृत्रघ्नश्छागस्यहविषः प्रिया० धामानि-यत्रवनस्पत" इत्यादि समानम् । अथ स्विष्टकृति विशेषः " प्रि-याधामान्ययाडिन्द्रस्य वृत्रघ्नश्छागस्यहविषः प्रियाधामान्ययाड्वन-स्पतेः प्रियापाथांस्ययाट् देवानांयज" । सूक्तवाकप्रैषे विशेषः । " अग्निम्म० डाशं० गृह्णन्नग्नयआज्यं गृह्णन्त्सोमायाज्यंबन्धन्निन्द्रा-यवृत्रघ्नेच्छागंसूपस्था० द्रायवृत्रघ्नेनावतमेदस्तः० प्रभीद्वृत्रघ-तपुरोडाशेने" त्यादि समानम् । ततो हृदयशूलादिसंस्थाजपा-न्तम् ॥ एवं साकमेधिकर्म ॥

अथ शुनासीरीया ॥सा वाजिनवर्जं समाना वैश्वदेव्या । अ-ग्न्यादिपञ्चदेवता आवाह्य ततः पशुदेवताः " वायुंनियुत्वन्तंउ० आवह वनस्पतिमावह इन्द्रं शुनासीरमावह सूर्यंउ० आवह " । अ-ध्रिगौ विशेषः । " मेधपतयेमेधम् " । वैश्वदेववत्पञ्चदेवता इ-ष्ट्वा ततः पाशुकं तन्त्रम् । पयसश्च वपायाः सह प्रदानम् । " आ-

वायोभूरशुचिपा" इत्यनुवाक्या। "होतायक्षद्वायुंनियुत्वन्तंउ० पयसश्छागस्यवपायामेदसोजुषतां हविर्होतर्यज पीवो अन्नारयिवृधः सुमेधा" इति याज्या। उपांशु मार्जयित्वा इन्द्रशुनासीरादि इडान्तं करोति। ततः पशुपुरोडाशेन चरन्ति। "प्रयाभिर्यासिदाश्वांसमि" त्यनुवाक्या। उपांशु। "होतायक्षत् वायुंनियुत्वन्तम्" उपांशु "पुरोडाशस्यजुषन्तांह० रायेनुयञ्जज्ञतूरोदसीम" इति याज्या। उपांशु स्विष्टकृदादिसमानं करोति। अथ हविर्यागः। मनोता। "आनोनियुद्भिः शतिनीभिरध्वरमि" त्यनुवाक्या। उपांशु। "होतायक्षत् वायुंनियुत्वन्तं उ० छागस्यहविषः आदात् उ० अग्रम० भः घसत् उ० न्नुनंघासे करत् उ० एवं० वायुर्नियुत्वान् हविर्होतर्यज प्रवायुमच्छाबृहतीमनीषे" ति याज्या। उपांशु वैनस्पतिमपे। यत्र वायोर्नियुत्वतः। उपां० "छागस्यहविष" इत्येवमादि समानम्। सूक्तवाके "च धनन्वायवेनियुत्वतेउ छागं सूपस्थाअद्य० वायवेनियुत्वते उ छागेनाद्यनंमे वृधतपुरोडाशेने" त्यादि समानं शूलविभृथादिसंस्थाजपान्तम्। एवं शुनासीरीया समाप्ता ॥ इतिकपिष्ठलसूत्रस्थानि पशुचातुर्मास्यानि समाप्तानि ॥

अथ पशुबन्धप्रयोगो वक्ष्यते। तत्र पशवो द्विविधाः। सौमिका निरूढाश्चेति। तत्राग्नीषोमीयप्रकृतिकाः सौमिकाः। निरूढाश्चैन्द्राग्नप्रकृतिकाः। इदानीं निरूढानां प्रकृतिभूतस्य ऐन्द्राग्नस्य निरूढपशोः प्रयोग उच्यते। स च षट्सु षट्सु मासेषु संवत्सरे वा कर्तव्यः। निमित्त ऐन्द्राग्नः पाण्मास्यः सांवत्सरो वेत्युक्तत्वात्। तस्य पुरस्तादुपरिष्टाच्चेष्टिर्भवति। अथ वा पुरस्तादेव नोपरिष्टात्। उपरिष्टाद्वा न पुरस्तात्। सा चेष्टिराग्नेयी भवति। आग्नावैष्णवी वा। अथ वा पुरस्तादाग्नेयी उपरिष्टा-

दाग्नावैष्णवी वा । आग्नेय्यामुक्ते याज्यानुवाक्ये । “ अग्नाविष्णूसजोषसाअग्नाविष्णूमहिधामेत्य” ग्नाविष्णोः । पौर्णमासवदन्यत् संस्थाजपवर्जम् । यत्रेष्टिः पशोरुभयतोऽन्यतरतो वा विहिता सा निरूढेव वेदितव्या । न सौमिकेषु अग्निप्रणयनम् । वरुणप्रघासवत् स्थानाचमने कृत्वा चात्वालोत्करावन्तरेण विहारं प्रविश्य पश्चात्पाशुबन्धिकाया वेदेर्निरसनोपवेशने कृत्वा प्रेषितोभिहिङ्कृत्य यूपायाञ्जनीया अन्वाह । “ अञ्जन्तित्वामध्वरेदेवयन्त” इत्युत्तमेन वचनेनार्द्धर्चे आरमेत् । आसम्प्रैषात् । अथ सम्प्रेषितो “ यदूर्ध्वस्तिष्ठा ” इत्यर्द्धर्चेन “ उच्छ्रयस्ववनस्पत ” इत्येतामुपसन्तनोति । “ समिद्धस्यश्रयमाण ” इत्येका “ ऊर्ध्वऊषुणऊतय ” इति द्वे । “ जातोजायतेसुदिनत्वेअह्नाम ” त्यर्द्धर्चे आरमेत् । आप्रैषात् । अथ प्रेषितः “ पुनन्तिधीरा ” इत्यनेनार्धर्चेन “ युवासुवासा ” इति उपसन्तत्य तयैव परिदध्यात् । अथाग्निमन्थनम् । वैश्वदेवीन्यायेनाग्निमन्थनीया अन्वाह । अथ वेदिश्रोण्योत्तरयेत्येवमादिना स्थित्वा “ नमः प्रवक्त्र ” इत्यादिसप्तदशसामिधेन्यः । आवाहने आज्यभागौ पशौ वैकल्पिकौ । करणपक्षे आवाह्य “ इन्द्राग्नी आवह वनस्पतिमावह देवांआज्यपामि” त्यादि । आज्यभागाभावे “इन्द्राग्नीअग्नआवहे” ति विशेषः । अग्नआवहेति तु प्रथमदेवतामिति वचनात् । संमार्गान्ते स्पृष्टोदकं प्रवृताहुतीर्जुहोति प्रत्यगुदगाहवनीयादवस्थायेत्येवमादिना धर्मेण । “जुष्टोवाचेभूयासमि” त्येकामाहुतिं हुत्वा ततः पुनरादाय सकृद्गृहीतेन पञ्चाहुतीर्जुहोति । “स्वाहावाचस्पतये स्वाहासरस्वत्यै स्वाहासरस्वते महोभ्यः सन्महोभ्यः स्वाहा स्वाहावाच” इत्यादीनां चतुर्णां मन्त्राणामन्ते स्वाहाकारो न कर्तव्यः । मन्त्रादावेव पठितत्वात् । त-

था चोक्तं स्वाहाकारान्तैर्मन्त्रैर्न चेन्मन्त्रे पठित इति । सवनीयपशावेवायं होमो नान्यत्रेति केचित् । एषां मन्त्राणां लिङ्गोक्ता देवता । उत्तमस्य तु ब्रह्मा । अथ "प्रशास्तस्तीर्थेनप्रपद्यस्वे" ति प्रशास्तारं तीर्थेन प्रपादयति । एवमुक्तो मैत्रावरुणश्चात्वालोत्करावन्तरेणाभिहृततरेण पादेन विहारं प्रपद्यते । होता तस्मै प्रत्यङ्मुखायावस्थिताय प्राङ्मुखो दण्डं प्रयच्छति । दक्षिणोत्तराभ्यां पाणिभ्यां "मित्रावरुण प्रयच्छामी" त्यन्तेन मन्त्रेण । प्रशास्ता तथाभूताभ्यामेव पाणिभ्यां होतृपाण्योरधस्ताद्गृह्णाति । "मित्राव० भूयासमि" त्येतेन मन्त्रेण । प्रतिगृह्य उत्तरेण होतारमतिव्रजेद्दक्षिणेन दण्डं हरेत् । न च दण्डेनात्मानं वान्यं वा उपस्पृशेत् आप्रैषवचनात्। दक्षिणे होतृषदनात् वेदेरुत्तरश्रोणेर्बहिः प्रह्वोवस्थाय प्रेषितो वेद्यां दण्डमवष्टभ्य ब्रूयात् होता होतृषदनाभिमन्त्रणादि स्रुगादापनान्तं प्रकृतिवत्करोति । अथैकादशप्रयाजा भवन्ति । तेषां प्रैषाः । " होतायक्षदग्निसमिधात्सुषमिद्धामि"ति प्रथमं सूक्तम् । अध्वर्युणा प्रेषितः मैत्रावरुणः प्रैषैर्होतारं प्रेषयेत् । होता यजत्याप्रीभिः । तत्रापि तनूनपान्नराशंसयोः व्यवस्था प्रकृतिवद्द्रष्टव्या । अथाऽऽप्रीव्यवस्थोच्यते । " समिद्धो अग्निरि" ति शुनकानाम् । "जुषस्वनः समिद्धामि" ति वासिष्ठानाम् । "समिद्धोअद्यमनुष" इति शुनकवसिष्ठव्यतिरिक्तानां सर्वेषाम् । तत्र "समिद्धोअद्यमनुषोदुरोणे" इत्येतत्सूक्तम् । तत्र अत्र्यादीनां नाराशंस एव द्वितीयो भवति । अस्य सूक्तस्य द्वितीयामुद्धृत्य नराशंसस्य महिमानमेषामिति वासिष्ठीं आवपेत् । इति वृत्तिकारोक्तम् । यथार्षि वा आप्रीया भवन्ति । तत्र यथार्षि आप्रीविभागार्थं भगवता शौनकेन श्लोक उक्तः । कण्वोऽङ्गिरोगस्त्यः शुनको विश्वामित्रोऽत्रिरेव च । वसिष्ठः कश्यपो वध्र्यश्वो

जमदग्निरथोत्तम इति । "सुसमिद्धोनआवहे"त्ये तत्प्रथमं काण्वाना-म् । "समिद्धोअग्नआवहे" ति तद्व्यतिरिक्तानामङ्गिरसानाम् । "समिद्धोअद्यराजसी" त्यगस्त्यानाम् । "समिद्धोअग्निर्निहित" इ-ति शुनकानाम् । "समित्समित्सुमना" इति विश्वामित्राणाम् । "सुसमिद्धायशोचिष" इति अत्रीणाम् । "जुषस्वनः समिद्ध" मिति वसिष्ठानाम् । "समिद्धोविश्वतस्पती" ति कश्यपानाम् । "इमांमेअग्नेसमिधंजुषस्वे" ति वध्र्यश्वानाम् । "समिद्धोअ-द्य" ति शुनकवध्र्यश्वव्यतिरिक्तानां भृगूणाम् । इति यथर्ष्याप्री-विवेकः । प्राजापत्ये तु पशौ शुनकवसिष्ठसहितानां सर्वेषामपि जामदग्न्या एव "समिद्धोअद्यमनुषोदुरोण" इत्येता भवन्ति । अ-त्रापि नाराशंस एव वासिष्ठीद्वितीया भवति । इत्याप्रीव्यवस्था ॥ अथ प्रयोगानुसारेण दशसु प्रयाजेषु समाप्तेषु पर्यग्नये प्रेषितः प्रशास्तानभिहिंकृत्य "अग्निर्होताना" इति तृचमन्वाह । शस्त्र्ये-ष्वेव होत्रकाणामभिहिंकार इति वचनात् । आद्योत्तमे त्रिः । पुनः प्रेषितः "अजैदग्निर" त्युपप्रैषमनवानमुक्त्वा अन्तर्वेद्यां द-ण्डं निधाय आसीत । इतः प्राक् दण्डनिधानं न कर्तव्यम् । अत्र प्रसङ्गादध्रिगौ ऊह्यानि पदानि वक्ष्यन्ते । "मेधपतये मेधपतिभ्यां मेधपतिभ्यः, मेधं मेधौ मेधान् मेध्रां मेधे मेधाः" इति वा । "अस्मै आभ्याम् एभ्यः अस्यै आभ्याम् एभ्यः एनम् एनान् एनां एने: एना अस्य अनयोः एषाम् अस्याः अनयोः आसां शरीरं शरीरे शरी-राणि त्वचं त्वचौ त्वचः वपां वपे वपाः वक्षः वक्षसी वक्षांसि बाहुः बाहून् दोषणि दोषाणि अंसौ अंसान् अच्छिद्रे अच्छिद्राः श्रो-णी श्रोणीः ऊरूः ऊरून् अष्ठीवन्तौ अष्ठीवन्तः वनिष्टुं वनिष्टू वनिष्टून्" इति ऊहः । "मेधांसयूथ्यः शरीरं वारयध्वात् अ-नूनंकृणुतात् खनतात् सृजतात् छमितारः अध्रिगाउ अपाप"

इत्यवसानानि। अथ प्रयोगः। होता अध्रिगुं यथापठितमेवाह "दैव्याः शमितार" इत्यादि "अपाप" इत्यन्तम्। तत्र "अस्नारस्यः संसृजतात् शमितारः अपापाकृतानि" यथास्थान उपांशु। "अध्रिगोशमी" त्यादि त्रिरुक्त्वा "शमितारोयदत्रमि" ति जपित्वा दक्षिणावृदावर्तेते होता मैत्रावरुणश्च मध्यावृतौ ब्रह्मयजमानौ। के चित्तूष्णीमावर्तनमिति वदन्ति। संज्ञप्ते पशावावर्तेरन्। अथ मैत्रावरुणस्तोकानाह। पूर्ववद्दण्डमादायानभिहिंकृत्य। "जुषस्वसप्रथस्तममि" त्येका "इमन्नोयज्ञमि" ति नवर्चं सूक्तम्। आद्योत्तमे त्रिः। अथ होता तस्मिन्नेवासने पुनर्निरस्योपविशति। स्रुगादापने पशाविति वचनात्। ततः स्रुगादापनमाह। अथ प्रेषितः प्रशास्त्रा "होतायक्षदग्निस्वाहे" ति प्रैषं ब्रूयात्। होता आप्रयोत्तमया यजति। वार्त्रघ्नावाज्यभागौ। प्रैषौ वैकल्पिकौ। अप्रैषपक्षे याज्यानुवाक्ये होता ब्रूयात् पौर्णमासवत्। सप्रैषपक्षे अनुवाक्याप्रैषं मैत्रावरुणो ब्रूयात्। "होतायक्षदग्निमाज्यस्यजुषन्तां हविर्होतर्यजे" ति पूर्वस्याज्यभागस्य प्रैषः। "होतायक्षत्सोममाज्यस्यजुषतां हविर्होतर्यजे" त्युत्तरस्य। सर्वत्र होतायक्षदिति प्रैषादिः। होतर्यजेति प्रैषान्तः। "३ ये यजामहेजुषाणोअग्निराज्यस्यवेतु ३ वौ० ये ३ यजामहेजुषाणः सोमआज्यस्यहविषोवेतु३ वौ०"। देवतादेशो न कर्तव्यः सप्रैषत्वात्। अथ वपायागः। "आदन्नहणात्वहामिरि" त्यनुवाक्या। "होतायक्षदिन्द्राग्नीवपायामदसोजुषतामि" ति प्रैषः। "शुचिन्नु स्तोमामि" ति याज्या। चात्वाले मार्जयन्ते। प्रशास्ता दण्डं निधाय मार्जनं करोति ब्रह्मा च "इदमापः प्रवहते" त्येतयर्चा "सुमित्र्या० द्विष्मः" इति मन्त्रेण च। तीर्थेन निष्क्रम्य होतृमैत्रावरुणावासीतामापुरोडाशश्रपणात्। शृते पुरोडाशे अनुमन्त्रितावे-

व तीर्थेन प्रविश्य पुरोडाशेन चरतः । "अभरतांशिक्षताभि" त्यनुवाक्या । "होतायक्षदिन्द्राग्नीपुरोडाशस्यजुषेतांहविर्होतर्यजे" ति प्रैषः । "गीर्भिर्विप्र" इति याज्या । अथ पुरोडाशास्विष्टकृत् । "इडामग्न" इत्यनुवाक्या । "होतायक्षदग्निपुरोडाशस्यजुषतामि" ति प्रैषः । "स्वदस्वहव्ये" ति याज्या । निगदोत्र न भवति पशौ नेति वचनात् । प्रकृतिवदिडोपह्वानम् । कर्मित्वान्मैत्रावरुणोपि इडां भक्षयति । अत्र न मार्जनम् । न तावन्मार्जनं पशाविति वचनात् । ततो दक्षिणाग्रहणम् । अथ मनोतायै संप्रेषितः प्रशास्तानभिहिंकृत्य ."त्वं ह्यग्नेप्रथमोमनोते"ति त्रयोदशर्चं सूक्तमन्वाह । आद्योत्तमे त्रिः । अथ हविर्यागः । "उभावामिन्द्राग्नी" इत्यनुवाक्या । "होतायक्षदिन्द्राग्नीच्छागस्यहविषआत्तामद्येत्यादि०"घस्तांनूनं०करतएवेन्द्राग्नीजुषेतांहविर्होतर्यजे" ति प्रैषः । "प्रचर्षणिभ्यः पृतनाहवेष्वि" ति याज्या । अर्द्धर्चे आरभेद्वसाहोमार्थम् । वसाहोमे कृते उत्तरमर्द्धर्चं ब्रूयात् ॥ अथ वनस्पतियागः । "देवेभ्योवनस्पते हवींषि"इत्यनुवाक्या । "होतायक्षद्वनस्पतिमभिहिपिष्टतमयारभिष्ठयारशनयाधीतं यत्राग्नेराज्यस्य हविषः प्रियाधामानि यत्र सोमस्याज्यस्य हविषः प्रिया० नि यत्रेन्द्राग्न्योश्छागस्य हविषः प्रि० यत्र वनस्पतेः प्रियापाथांसि यत्र. देवानामाज्यपानांप्रिया० नियत्रेन्द्राग्न्यो० याधामानि ·यत्राग्नेर्होतुः प्रियाधामानि तत्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्रक्ष इभीयां समिवक्रत्वीकरदेवं देवो वनस्पतिर्जुषतां हविर्होतर्यज" ।. एवं सर्वत्रदेवतावाहनक्रमेण देवता निगमयेत् । आज्यभागयोरकरणपक्षे द्वयोरुद्धारो वनस्पतिस्विष्टकृत्सूक्तवाकप्रैषेषु । " वनस्पतेरशनयानिपूये"ति याज्या । अथ स्विष्टकृतः " पिप्रीहिदेवानि"ति पुरोनुवाक्या । " होतायक्षदग्निस्विष्टकृतमयाडग्निरग्नेराज्यस्यहविषः प्रियाधामान्ययाट् सोम-

मस्याज्यहविषः प्रि० डिन्द्राग्न्योश्छागस्य हविषः प्रि० ड्वनस्पतेः प्रियापाथांस्य० यादृदेवानामाज्यपानां० यक्षदग्ने० हविर्होतर्यज "अग्नेयदद्ये" ति याज्या। निगदोत्र न भवति आदेशश्च पशौ नेत्युक्तत्वात् समैपत्वाच्च। पूर्ववदिडोपाह्वानम्। इडां मैत्रावरुणोपि भक्षयति। न मार्जनम्। एतावन्मार्जनं यज्ञाविति वचनात्। अथैकादशानुयाजाः। "देवंबर्हिरि" त्येतन्तृतीयं प्रैषसूक्तम् अध्वर्युणा प्रेषितः प्रशास्ता प्रैषेर्होतारं प्रेष्यति। प्रशास्त्रा प्रेषितो होता "देवंबर्हिरि" त्यादिभिर्यजति। याज्या उच्यन्ते। "देवंबर्हिरि" त्येका। "देवीर्द्वारि" इत्यादिकाः षट्। "देवोनराशंस" इत्यष्टमः। "देवोवनस्पतिरि" ति नवमः "दिवंबर्हिर्वारितनामि" ति दशमः। "देवोअग्निः स्विष्टकृदि" त्युत्तमः। अनवानं प्रेष्यत्यनवानं यजति। उत्तमा तु प्रकृत्या वा। अथ सूक्तवाकार्थमाश्रावणे कृते अप्रेषित एव मैत्रावरुणोग्निमद्येतिसूक्तवाकप्रैषं ब्रूयात्। अत्र वनस्पतिवर्जमावाहनक्रमेणैव देवता निगमयेत्। "अग्निमद्य० डाशंवृहन्नग्नय आज्यंगृह्णंत्सोमायाज्यंवध्नन्निन्द्राग्निभ्यां छागं सूपस्था अ० अग्नयआज्येनेन्द्राग्निभ्यां छागेनाघस्तान्तं मेदस्तः प्रतिपचताग्रभीष्टामवीवृधेता पुरोडाशेनत्वामद्य" त्यादि। आज्यभागयोरकरणपक्षे तयोरुद्धारः। प्रैषान्ते दण्डमाहवनीये प्रक्षिपेत्। मावभृथे तु कर्मणि अप्सु प्रक्षिपेत्। अथ होता सूक्तवाकादिप्रायश्चित्तहोमान्तं प्रकृतिवत्करोति। सूक्तवाके "अग्निरिदं० सोमइदं० इन्द्राग्नीइदं० जुषे० धेतां० क्रातां वनस्पतिरिदं० देवाआज्यपा" इत्यादि। वेदस्तरणं कृताकृतम्। प्रायश्चित्तानन्तरमुभावपि अग्निपशुके व्यवस्य ततः तीर्थेन निष्क्रम्य ततो हृदयशूलं भूमौ प्रक्षिप्यमाणं सर्वे अनुमन्त्रयेयुः बहुवचनत्वात्। "शुगसी" त्यनेन मन्त्रेण। तस्योत्तरस्मादप उप-

स्पृशन्ति। "द्रीयेराज्ञ" इत्यादि० "द्रिषम" इत्यन्तेन मन्त्रेण ।अथ हृदयशूलमनवेक्षमाणास्तमापत्यायन्तः प्रत्येकं तिस्रस्तिस्रः समिधः कुर्वते। "अग्नेः समिदसितेजोमेदेही"ति प्रथमाम् । "एधोस्येधिषीमही"ति द्वितीयाम् । समिदसिसमेधिषीमही"ति तृतीयाम् । ततस्तीर्थेन प्रविश्य प्रत्यगुदगाहवनीयादवस्थायावहनीयमुपतिष्ठते "आपोअद्यान्वचारिषमि"त्यनयर्चा । तत्र स्थित एव समिधोभ्यादधाति । यथागृहीतम् । "अग्नेः समिदसितेजोसितेजोमयिदेहि स्वाहा सोमस्यसमिदसिदुरिष्टेर्मापाहि स्वाहा पितॄणां समिदसिमृत्योर्मापाहिस्वाहा" । तत आहवनीयमुपतिष्ठते "ओक्षम" इत्यनेन ॥ इति पशुतन्त्रम् ॥ मन्द्रादिस्वरविशेषाश्च प्रकृतिवद्द्रष्टव्याः । सर्वेषां पशूनामेतदेव तन्त्रम् । प्रदानेन[illegible]मुक्ताः प्रैषाः । अस्मिन् खण्डे एकादश पशवः समाम्नाताः ते च एकादशिन्यामुच्यन्ते । तेषामेता देवताः। अग्निः, सरस्वती, सोमः, पूषा, बृहस्पतिः, विविश्वदेवा, इन्द्रः,मरुतः, इन्द्राग्नी, सविता, वरुण, इति। अग्नीषोमाविमंसुम इत्यस्मिन्खण्डे अष्टादश पशव उक्ताः । तेषां देवताः। अग्नीषोमौ, मित्रावरुणौ, प्रजापतिः, सूर्यः वायुर्नियुत्वान्, वायुः, अदितिः, विष्णुः, विश्वकर्मा, त्वष्टा, सोमापूषणौ, आदित्याः, द्यावापृथिवी, रुद्रः, अश्विनौ, इन्द्रो वृत्रहा, वाक्, सरस्वानिति । एवमेकोनत्रिंशाः पशवः सूत्रकारेण समाम्नाताः । एषां पशूनां वपापुरोडाशहविर्लक्षणप्रदानत्रयस्य याज्यानुवाक्या "अग्नेनयसुपथारायेअस्मानि" त्यारभ्य "यस्यव्रतंपशवोयन्तिसर्व" इत्येवमन्ताः । ताः यथाक्रमेणैकैकस्या देवतायाः षट् षट् ऋचो ग्राह्याः । आद्यास्तिस्रोऽनुवाक्याः । उत्तरास्तिस्रो याज्याः । अस्मिन्सूत्रे असमाम्नातानां पशूनां देवतालक्षणा याज्यानुवाक्या । इत्युक्तलक्षणविशिष्टा याज्यानुवाक्या यथासम्भवं ग्रा-

शाः । अयं तु विशेषः । प्रैषासमाम्नाये अग्नीषोमदेवत्याः पठिताः । तत्र देवतान्तरयुक्तेषु पशुषु वपापुरोडाशहविःषु देवतान्तरमग्नीषोमस्थाने निगमयेत् । छागस्थाने पशुतन्त्रे गोपशौ गोशब्दोस्राशब्दयोरन्यतरेणैव निगमनं कुर्यात् नान्येन तद्वाचकेन मेषशब्दाविशब्दयोरन्यतरेणैव हयशब्दाश्वशब्दयोरन्यतरेणैव । अन्यजातीयानां यथार्थं निगमनं भवति । पशुदेवताया एकत्वे बहुत्वे वा " आदत्त घसत् करत् जुषतां अघत् अग्रभीत् अवीवृधत " इति देवताभिधायिनां पदानां प्रैषेषु यथार्थमूहः कर्तव्यः । नाभिरूपमा मेदो हविरित्यनूहानि । एषां पशूनां प्राजापत्य उपांशु । सावित्रसौर्यवैष्णवैश्वकर्मण्याश्चोपांशु इति केचित् । तेषां प्रैषे तु देवतार्थत्वसवाचकपदानामुपांशुत्वम् । आददादीनां वैकल्पिकमुपांशुत्वम् । येन्ये तद्वचनाः परपक्षास्तानुपांशूच्चैर्वा प्रत्यक्षमुपांश्विति वचनात् । आदत्त घसत् करत इति पदत्रयस्य नित्यमेवोपांशुत्वं पुनर्विधानात् । उक्तादन्यप्रैषेषु उच्चैरेव प्रयोक्तव्यम् । याज्यानुवाक्ये तूपांश्वेव । अयं सर्वेषां पशूनां साधारणविधिः ॥

अथ सौत्रामण्याः प्रयोग उच्यते ॥ तस्य ऐन्द्राग्नवत्कल्पः । विशेषस्तूच्यते । आश्विनसारस्वतैन्द्राः पशवः । बार्हस्पत्यो विकल्पेन चतुर्थः । आश्विनश्छागः । सारस्वतो मेषः । ऐन्द्रो मेषः । ऐन्द्रसावित्रवारुणाः पशुपुरोडाशाः । आवाहने " अग्निमग्न आवह सोममावह अश्विनावावह सरस्वतीमावह इन्द्रमावह वनस्पतिमावह " ततो ग्रहदेवताः सर्वाः पृथगादिश्य सकृदेवावहेत् । एकप्रदानत्वात् । अश्विनौ सरस्वतीमिन्द्रं सुत्रामाणमावह इति केचित् । "देवा आज्यपा" इत्यादिपुरोडाशदेवतानामावाहनं भवति । आवाहनादूर्ध्वमुत्पत्तेः । अध्रिगौ विशेषः । "मेधपतिभ्यो मेधान् प्रै-

भ्योअग्निभरत० अन्वेनान्माता उदीचीनामेषां पदोनिधत्तात् शरीराणि एकधैकधैषां त्वच आ पुरानाभ्यां अपि० वपाउत्० दन्तरन्तरेवोष्माणंश्येनमेषां वक्षांसि कृ० साबाहूनशलादोषणी० वामानच्छिद्राः श्रोणीकवयोरुन्त्स्रेकपर्णाष्ठीवतः षड्विंशतिरेषां गात्रमेषामनूनङ्कृणुतात् ऊव० अस्नार० वसिष्ठूनेषांमारा०" इत्यूह्यानि पदानि । अथ वपायागे प्रथममश्विनोः । "आयश्वातां नासत्ये" त्यनुवाक्या "होता० अश्विनौछागस्यवपायामेदसोजुषतां हविर्होतर्यज" इति प्रैषः । "उदुस्तोमासो अश्विनो" रिति याज्या । अथ सरस्वत्याः । "एकाचसत्सरस्वतीनदीनामि" त्यनुवाक्या । "होतायक्षत्सरस्वतींमेषस्यवपायामेदसोजुषतां हविर्होतयज" इति प्रैषः । "प्रक्षोदसाधसमे" ति याज्या । अथैन्द्रस्य । "इद्रं नवोनेमधिता" इत्यनुवाक्या । "होता० इन्द्रंमेषस्यवपाखे" ति प्रैषः । "उरुन्नोलोकमनुने ति" याज्या । प्रैषेषु यथार्थमूहः । मार्जनान्ते ग्रहयागः इति के चित् । "युवंसुराममश्विने" ति ग्रहाणां पुरोनुवाक्या । "होतायक्षत्सरस्वतीमिन्द्रंसुत्रामाणमि "ति सूत्रोक्तः प्रैषः । "पुत्रमिवपितरावश्विनोमे" ति याज्या । "अग्नेवीही" त्यनुवषट्कारः । "सुरासुतस्याग्नेवीही" ति वा । "नानाहिवामि" ति मन्त्रेण स्थालीस्थां ग्रहस्थां वा सुरामवेक्षेत् । अधोवाहू कृत्वा "सोमएष" इति सोममवेक्षेत । उपहूय "यदत्ररिप्तमि" ति प्राणभक्षं भक्षयति । प्रतिभक्षं मन्त्रावृत्तिर्भवति । अथ हविर्यागः । तत्र प्रतिपशु मनोता मन्त्रावृत्तिः सकृदेवेत्येके । प्रथममश्विनोः । "आनोदेवेभिरुपयातमर्वागि" त्यनुवाक्या । "होतायक्ष० दश्विनोच्छागस्यहविष आनामद्य० घस्तांनूनं० करतएवाश्विनौजुषेतांहविर्होतर्यजे" ति प्रैषः । "हिरण्यत्वङ्मधुवर्णोघृतस्नुरि" ति याज्या । अथ सर-

स्वत्याः। "सरस्वत्यभिन" इत्यनुवाक्या। "होतायक्षत्सरस्वतीमेषस्यहविष आवयद्य०घसन्नूनं० करदेवंसरस्वतीजुषतां० यजेति" प्रैषः। "यस्तेस्तन" इति याज्या। अथेन्द्रस्य "इन्द्रोराजाजगत." इत्यनुवाक्या। "होता० दिन्द्रमेषस्यहविषः आदद्य० घसन्नूनं करदेवेन्द्रोजुषतां० यज"। इति प्रैषः। "स्वस्तयेवाजिभिश्चे" ति याज्या। अथ वनस्पतियागः। पूर्ववत्। प्रैष विशेषः। "यत्राग्नेराज्यस्यहविषः प्रि० यत्रसोमस्याज्यस्य० यत्राश्विनोश्छागस्यहविषः प्रि० यत्रसरस्वत्यामेषस्यहवि०" यत्रेन्द्रस्यमेषस्यहविषः प्रि० यत्रवनस्पतेः प्रियापाथांसि० तत्रैतान्प्र० स्भीयमइवकृत्वी०यज"। अथ पुरोडाशयागः। ऐन्द्रसावित्रवारुणाः पशुपुरोडाशाः। प्रथममिन्द्रस्य "यइन्द्रशुष्म" इत्यनुवाक्या। "हो० दिन्द्रंपुरोडाशस्य जुषतामि" ति प्रैषः। "प्रससाहिष" इति याज्या। अथ सवितुः। "सत्रानोदेवः सवितः" त्यनुवाक्या। "हो० त्सवितारंपुरोडाशस्यजुषतामि" ति प्रैषः "धियंवाजयन्त" इति याज्या। अथ वरुणस्य। "अयंसुतुभ्यंवरुणस्वधावः" इत्यनुवाक्या। "हो०द्वरुणंपुरोडाशस्यजुषतामि" ति प्रैषः। "तद्विनक्तन्नदिवे" ति याज्या। अथ हविषां पुरोडाशानां च स्विष्टकृत्तन्त्रेण भवति। "पिप्रीहि देवांनि" त्यनुवाक्या। "होतायक्षदग्निस्विष्टकृतमि" त्यादि। अयाडग्नेरित्यादि वनस्पतिप्रैषवत्। प्रियाधामान्ययाडिति विशेषः। तत्र पुरोडाशदेवतानां निगमनं नास्ति। आवाहनादूर्ध्वमुत्पत्तेः। "अग्नेयद्द्ये" ति याज्या। सूक्तवाकप्रैष विशेषः। अग्निमद्येत्याज्यभागान्तमुक्त्वा "बध्नन्नश्विभ्यांछागंसरस्वत्या इन्द्रायमेषांसूपस्था" इत्याद्याज्यभागान्तमुक्त्वा "अश्विभ्यांछागेनसरस्वत्या इन्द्रायमेषाभ्यामग्रसान्मेदस्तः प्र-

तिपचताग्नभीपुरवीभृघन्तुपुरोडाशैस्त्वामद्ये " त्यादि । सूक्तवाके । आज्यभागोत्तरम् "अश्विनाविदं० जुषेतां० सरस्वतीदं० जुषतां० इन्द्रइदं० जुषत कृत वनस्पतिरिदं० अश्विनौसरस्वतीन्द्रः सुत्रामाइदं० देवाआज्यपा " इत्यादि । हृदयशूलाभिमन्त्रणे "शुचस्थोयोस्मानी " ति विशेषः । अन्यत्सर्वमैन्द्राग्नवत् । संस्थितेवभृथेष्टिः । तामुत्तरत्र वक्ष्यामः । केषां चिन्मते सौत्रामण्या बार्हस्पत्यः पशुश्चतुर्थो भवति । तस्या " बृहस्पतेयापरमापशवादि " ति पट्ऋचः सूत्रपठिता अवदानत्रयस्य याज्यानुवाक्याः । सौत्रामण्यामेव रौद्रं वृषभं केचिदिच्छन्ति । तैः सह प्रयोगे पेषशब्दयोरन्यतरः प्रयोक्तव्यः । समाप्ता सौत्रामणिः ॥

अथ प्रायश्चित्तानि ॥ तत्र ब्रह्मकर्तृकाणि प्रायश्चित्तान्युच्यन्ते । यदा मन्त्रकर्मणोर्विपर्यासो भवति, अथ वा अन्तरायो भवति, स च विपर्यासोन्तरायः स्वयं दृष्टो भवति, अन्येनाख्यातो भवति, यदा वा अन्तराया विपर्यासाश्च समकालिन्य अनेके भवन्ति, तदाजान्वाच्याहुतिमेकां जुहुयात् । यजुर्वेदाद्येन् " भुवः स्वाहा " इति दक्षिणाग्नौ जुहुयात् । आग्नीध्रीयप्रणयनादूर्ध्वं यजुर्भ्रेषे "भुवः स्वाहा" इत्याग्नीध्रीये जुहुयात् । न दक्षिणाग्नौ । सामवेदभ्रेषे "स्वः स्वाहे " त्याहवनीये । यदि त्रिभ्यो वेदेभ्यो भ्रेषो भवति यद्वा अमुकवेदत इत्यज्ञातो भवति तदा " भूर्भुवः स्वः स्वाहा " इति त्रिभिर्मन्त्रैरेकामाहुतिमाहवनीय एव जुहुयात् । प्राक् प्रयाजेभ्योङ्गारं बहिष्परिधिनिर्वृत्तं स्रुवदण्डेनाभिनिदध्यात् " मातप " इति मन्त्रेण । अत्र सूत्रे बहिःपरिधिशब्दे विप्रतिपन्नाः केचित् नात्र परिधिशब्देन परिधिदेशा गृह्यन्त इति आहुः । अन्तःपरिधिदेशे निवपेयुरितिवत् देशशब्दाभावात् । अन्ये तु प्राच्यां दिशि परिध्यभावेपि प्रायश्चित्ताभिधानादितरत्रापि दिक्षु

परिधिदेश एव गृह्यते इत्याहुः। एतस्मिन्मते परिधिस्थापनात्प्रागप्यङ्गारनिर्गमे प्रायश्चित्तमेतद्भवति। तमङ्गारं बहिःपरिधिनिर्गतं प्रतिदिशम् "अमुंमाहिंसीरि"ति मन्त्रेण स्रुवदण्डेनाभिनिदध्यात्। तद्यथा। पुरस्ताच्चेदङ्गारो निर्गतः ततं "अध्वर्युमाहिंसीर्यजमानंमाहिंसीः"। दक्षिणतश्चेन्निर्गतस्ततो "ब्रह्माणंमाहिंसीर्यजमानंमाहिंसीः"। पश्चाच्चेन्निर्गतस्ततः "होतारंमाहिंसीः पत्नींमाहिंसीर्यजमानंमाहिंसीः"। उत्तरश्चेन्निर्गतस्तत "आग्नीध्रंमाहिंसीर्यजमानंमाहिंसीरि"ति। अथैनमङ्गारमाहवनीये निक्षिपेत् "आहंयज्ञाम"ति मन्त्रेण। अथ तमङ्गारमभिजुहुयात् "सहस्रशृङ्ग" इति मन्त्रेण। इति बहिष्परिध्यङ्गारपतनप्रायश्चित्तम्॥

अथ प्रायश्चित्तप्रकरणे अनेककर्तृयुक्ते कर्मणि कर्तृविशेषमनादिश्य यत्र जुहोति जपतीति वा कर्मचोदना भवति तत्र ब्रह्माणं कर्तारं प्रतीयात्। यत्र तु कर्मणि ब्रह्मा नास्ति तत्र कर्तैव जुहुयाज्जपेद्वा। विपर्यासान्तरिते मन्त्रे कर्मणि वाऽव्याते वोपलक्ष्य वा जान्वाच्याहुतिं जुहुयादित्यादावनुमन्तव्यम्। अस्मिन्प्रकरणे प्रायश्चित्तहोमानां प्रधानहविर्यागवत्उपांशुत्वमनुमन्तव्यम्। अन्यदपि परिभाषासिद्धं यथास्थानेनुसन्धेयम्॥

विध्यपराधे प्रायश्चित्तिर्वेदितव्या॥ अयमर्थः। यत्र विहितस्याकरणं भवति अविहितस्य करणं विहितस्याप्यङ्गहीनस्य करणं तत्रैवं विध्यपराधे प्रायश्चित्ताख्यं कर्म कर्तव्यम्। तच्च विध्यपराधज्ञानानन्तरं कार्यमित्युत्सर्गः। अपवादमग्रे वक्ष्यामः। शिष्टाभावे प्रतिनिधिर्भवति। अयमर्थः। यत्र विहितं द्रव्यं कर्मकाले नास्ति जातमपि वा यत् स्तोकत्वात्प्रधानमपि संपादयितुं न शक्नोति तत्र विहितद्रव्यसदृशं द्रव्यान्तरमुपादाय कर्म कर्तव्यम्। यथाऽऽज्य-

पयसोः परस्परं प्रतिनिधित्वम् । यथाह कौण्डिन्यः । आज्याभावे पयः पयसोऽभावे आज्यं तावत् । यथोक्तवस्त्वलाभे तु ग्राह्यं तदनुकारि यत् । यवाभावे हि गोधूमा व्रीह्यभावे तु शालय इति मनुः । प्रतिनिधौ न प्रायश्चित्तम् । अन्वाहिताग्नेः प्रयाणोपपत्तौ पृथगग्नीन्नयेयुः । स्पष्टोर्थः । यदा विहृताग्निस्तस्यां रात्र्यां यथासमन्तरेण स्थातुं न शक्नोति तदाग्नीन् पृथक् पात्रे कृत्वा तानग्नीन्बहवः पुरुषा नयेयुः । अथ पक्षान्तरमाह । "तुभ्यंताअङ्गिरस्तमे" ति वाज्याहुतिं हुत्वा समारोपयेत् । "तुभ्यंताअं० येमिरेस्वाहाकामायेदम्" इत्याहवनीये हुत्वा समारोपयेद्वा । "अयन्तेयोनिर्ऋत्विय" इत्यरणीं गार्हपत्ये प्रतितपेत् । "अयन्तेयोनि० नोवर्द्धयागिरः" अनेन मन्त्रेण गार्हपत्ये प्रतितपेत् । नाग्न्यन्तरे । पाणी वा । अथ वा पाण्योः समारोपः । "यातेअग्नेयज्ञियातनूः जातवेदोभुवआजायमनः" इति मन्त्रेण गार्हपत्ये पाणी प्रतितपेत् । यदा तु दक्षिणाग्निः पृथगरणिर्भवति तदा तयोरेव पाण्योः समारोपणं कार्यं तूष्णीम् । मन्त्रेणेत्येके । यदुक्तं पाणिप्रतपनमरणीप्रतापनं च तदग्नीनामेकयोनित्वे गार्हपत्य एव कर्तव्यं नेतरयोरित्याहुः । अरणीसमारोपणं पाणिसमारोपणं चाहिताग्निना कर्तव्यं नाध्वर्युणेति भवनागाचार्यो मन्यते । मन्त्रेण स्वरादि सम्यगुच्चार्य समारोपणं कर्तव्यम् । अन्यथाग्नीनां लौकिकत्वं स्यात् ॥ एवमनन्वाहिताग्निरहुत्वा । अन्वाहिताग्नेः प्रत्यक्षानयनं नास्ति । विहारदेशे यत्र क्वापि संचारयितव्ये अनुच्छूनमता संचारयितव्यम् । समारोपौ पूर्ववत्कर्तव्यौ । या तु विहृताग्नेराहुतिरुक्ता "तुभ्यंताअङ्गिरस्तमे" ति, सा अविहृताग्नेर्न भवति । ततो यथोक्तमाहिताग्निः प्रणयनं कुर्यात् । यदि पाण्योररणी संस्पृश्य मन्थयेत् । यदि पाण्योस्तया समारोपणं कृतं तदानीमग्निहोत्रकाले पाणि-

भ्यामरणीं तूष्णीं संस्पृश्य मन्थयेत्। "प्रत्यवरोहजातवेद० यजमानायशंयोः" इति मन्त्रं स्वयमुक्त्वा मन्थयेत्। अन्यो वा मन्थेत्। यजमानो मन्थनकाले यावदग्नेर्जन्म तावदरणी संस्पृशन्नास्ते। यदि उत्पादनप्रयत्नो निष्फलः स्यात्तदा पुनरारम्भावसरे मन्त्रमावर्तयितव्यम्। यदि तु अरण्योः समारोपणं कृतं तदा अग्निहोत्रकाले यजमानो मन्त्रमुक्त्वा मन्थयेदेव। ततोऽग्निहोत्रम्। इति समारोपणप्रकरणम्॥

अथाहवनीयबहिर्निर्गमनप्रायश्चित्तम्॥ आहवनीयमपदीप्यमानमर्वाक् शम्यापरासात् आहवनीयस्यैकदेशः समस्तो वा यद्यायतनाद्बहिर्गच्छेत् शम्यापरासादर्वाक् तदा "इदन्तएकं पर० देवानांपरमेजनित्रे" अनेन मन्त्रेणायतनेऽग्निं प्रक्षिप्य तत्रैव व्याहृतिहोमः सर्वप्रायश्चित्तं च नाग्न्यन्तरे प्रायश्चित्तम्। तत्र तूष्णीं प्रक्षेपो व्याहृतिहोमश्च यावत्प्रायश्चित्तकालमग्निश्चेज्जीवति तदा प्रायश्चित्तं न स्फुलिङ्गमात्रस्य। इति बहिर्निर्गमनप्रायश्चित्तम्॥

अथाग्निशम्यापरासातिक्रमे, स्वकाले दर्शपूर्णमासानुष्ठानाभावे, अन्यस्याग्निषु यजने, अस्याग्निषु अन्ययजने, अस्याग्निषु अन्येनाग्निना व्यवाये च प्रायश्चित्तम्। यदि त्वतीयाच्चमावास्यां पौर्णमासीं वातीयात् यदि नाऽन्यस्याग्निषु यजेत यदि वास्यान्योऽग्निषु यजेत यदि वाऽस्यान्योऽग्निरग्नीन्व्यवेयात् एतेषु पञ्चसु निमित्तेषु पाथिकृतीष्टिर्भवति। अग्नये पथिकृतेऽष्टाकपालं पुरोडाशं निर्वपेत्। तस्य याज्यानुवाक्ये "वेत्थाहिवेधो अध्वनअः० वानामपिपन्थामगन्मे" ति। शकटवहनक्षमो अनड्वान्दक्षिणा भवति। अथ वा पूर्णाहुतिं जुहुयात्। पूर्णाहुतिपक्षे जुहां द्वादशगृहीतं चतुर्गृहीतं वा "अग्नयेपथिकृतेस्वाहे" त्याहवनीये जुहु-

यात् । " अग्नयेपथिकृतइदं० " ॥

अथ व्यवायप्रायश्चित्तम् ॥ यदि वास्याग्निहोत्र उपसन्ने हविषि वा निरुप्ते चक्रीवच्छ्वा पुरुषो वा विहारमन्तरियात् अग्निहोत्रद्रव्ये कुशेषु सादिते दर्शपूर्णमासादिषु हविर्निरुप्ते, रथशकटादिश्वमनुष्यजातिपशुपक्षिसर्पमार्जारमूषकनकुलादिभिर्विहारातिक्रमे, 'यजमानस्य प्रवासमरणे इत्यादिनिमित्तेषु सत्सु पाथिकृतीष्टिः पूर्णाहुतिर्वा । इतरेष्टिमध्ये एतानि निमित्तानि उत्पन्नानि तर्हि प्रक्रान्तेष्ट्या समानं तत्र पथिकृतिः कार्या । दर्विहोममध्ये चेत् प्रक्रान्तं समाप्यानन्तरं कर्तव्या । अग्निभिन्नव्यवाये इष्टेः प्राक् गामन्तरेण नयेत् । तत्र शुनो गमने विशेषः । " इदंविष्णु " रेतयर्चा भस्मना शुनः पादानि पूरयेत् । प्रतिपदं मन्त्रावृत्तिः । " अनन्तरं तन्तुन्तन्वन्रजसो भानुमन्वीही " त्यनयर्चा गार्हपत्याहवनीययोरन्तरं भस्मराज्योदकराज्या च सन्तनुयात् । प्रतिधारा मन्त्रावृत्तिः । तत आहवनीयमनुगमय्य पुनः प्रणीय " यदग्नेपूर्वंप्रहि० सुमत्यावाजवत्या त्वमग्नेसप्रथाअसि० तन्वते " इति द्वाभ्यामुपतिष्ठेत । अस्यां पथिकृदिष्ट्यां बलीवर्दो दक्षिणा । इति रथाद्यन्तरागमनप्रायश्चित्तम् ॥

यद्याहिताग्निर्ग्रामान्तरे मृतस्तदा मरणश्रवणानन्तरं पथिकृतिं कृत्वा अन्यवत्सेनान्यां गां दुग्ध्वा तस्मिन्नेव विहारे तूष्णींधर्मकं सायं प्रातरग्निहोत्रसंज्ञकं कर्मान्तरं यजमानस्य शरीरसंस्कारपर्यन्तं जुहुयात् । सर्वहुतं प्रजापतिध्यानं " प्रजापतयइदं " तद्यथा । अध्वर्युः प्राचीनावीती परिसमूहनादि कृत्वा गार्हपत्यदक्षिणार्धे तूष्णीमधिश्रयणादि कृत्वा दक्षिणत उद्वास्य तूष्णीं स्रुचि क्षीरं क्षिप्त्वा पलाशीसमिधमधस्ताद्धारयमाणो दक्षिणेन विहारं गत्वा आहवनीयस्य पश्चात्कुशेषु उपसाद्य समिधमाधाय तू-

र्णीं सकृदेव सर्वं जुहुयात् । अन्यत्सर्वं लुप्यते । अत्रैव ब्राह्मणे विशेषः । यस्याः कस्याश्चिद्गोः पयसा पुत्रादयो जुहुयुः नाभिवान्यवत्सानियमः इत्येकः पक्षः । पुनः पक्षान्तरमाह प्रवासमृतस्य अङ्गानामानयनपर्यन्तमाहवनीयादीनां प्रत्यक्षधारणं नात्र पूर्वोक्तहोमः । सर्वदा प्रज्वलेयुः सा तत्र प्रायश्चित्तिः । इत्याहिताग्नेर्ग्रामान्तरमरणे प्रायश्चित्तम् । यद्याहिताग्नेरपरपक्षे मरणशङ्का स्यात् तदानीमारभ्य तस्य पक्षस्य शिष्टा आहुतयः पक्षहोमन्यायेन हुत्वा दर्शं च कृत्वा पूर्वपक्षं नयेत् । इदं तु जीवत एव । केचिद्दक्षिणायने मरणशङ्कायामपि उदगयनाद्येतत्कुर्वन्ति । शास्त्रान्तरे वचनं दृश्यते ॥

अथ हविर्दोषप्रायश्चित्तानि ॥ यद्यावाहनादूर्ध्वं प्रधानयागादर्वाक् केशादिभिर्हविर्दुष्टं तदा आज्येनादुष्टैः सह प्रकृतामिष्टिं समाप्य यद्दैवत्यं हविर्व्यापन्नं तस्यैवाग्न्यन्वाधानादि पुनर्यागः कर्तव्यः । एवं द्वयोर्बहूनां व्यापत्तौ द्रष्टव्यम् । एवं प्रधानयागोत्तरं नाशे शेषकार्यमाज्येनैव कर्तव्यं न पुनरुत्पत्तिः । दुष्टानि हवींषि भिन्नभिन्नानि च तूष्णीमप्सु प्रक्षिपेत् । दुष्टसान्नाय्यं " प्रजापतेनत्वदेतान्यन्य० स्याम पतयो रयीणाम् " इत्यनयर्चा वल्मीकद्वारि मध्यमेन पलाशपर्णेन जुहुयात् । अप्सु वा तूष्णीं प्रक्षिपेत् । यदि सान्नाय्यं विष्यन्दमानं कुम्भीमतीत्याग्निं भूमीं वा प्राप्नुयात् तदतिरिक्तं तदुदुष्टं च तदेव । स्थालीगतेनादुष्टेन यागः । यत्कुम्भ्यां बहिर्गमनमात्रेण विष्यन्दति तदसिक्तमदुष्टं च । यदुष्टं तत् " महीद्यौः पृथिवीचन० भरीमभिः " अनेनान्तः परिधिदेशे निनयेत् । परिध्यभावेऽपि सायन्दोहनाशे प्रातर्दोहं द्विधा कृत्वा एकं भागं दधिभावायातं कृत्वा ताभ्यां दधिपयोभ्यां यागः कर्तव्यः । प्रातर्दोहनाशे तत्स्थाने पुरोडाशेन यजेत् । उभयदोषे ऐन्द्राग्नान् पञ्च-

शरावपरिमितान् व्रीहीन्निरूप्य गार्हपत्ये श्रपयित्वा द्वयोः पात्रयोरुद्धृत्य तस्मादेव हविषःप्रचरणकाले अग्निमिष्ट्वा इन्द्रं यजेत। अग्निर्देवानां प्रथमं यजेदिति श्रुतेः। ऐन्द्रमेवैके। अस्मिन्नपि पक्षे प्रचरणकाले ऐन्द्रं पञ्चशरावमोदनं विभज्येन्द्रं यजेत। आज्यान्वाहार्यादीनामल्पोपहतौ प्रोक्षणं सर्वप्रायश्चित्तं च। अग्निहोत्रोच्छेषणनाशे तण्डुलैरातञ्चनं सर्वप्रायश्चित्तं च। इति हविर्दोषसान्नाय्यप्रायश्चित्तम्॥

सान्नाय्यार्थमपाकृता वत्सा यदि निःशेषं पिबेयुस्तदा वायुदेवत्या यवाग्वा सह प्रक्रान्तामिष्टं समाप्य पुनर्यागः। अथाऽसर्वपाने यागपर्याप्ते सर्वप्रायश्चित्तं पुनर्यागः। इदमपि हविर्दोषप्रायश्चित्तम्।

अथाग्निहोत्रार्थमधिश्रितद्रव्यक्षरणे प्रायश्चित्तम्॥ अधिश्रितमग्निहोत्रद्रव्यं स्थालीमूलेन यदि श्रवति तदा "गर्भस्रवन्तमगदम० निर्ऋतिं परस्तात्" अनेनाभिमन्त्र्य दुष्टमप्सु प्रक्षिप्य सर्वप्रायश्चित्तं हुत्वा शेषेण जुहुयात्। अशेषे पुनर्दुग्ध्वा अग्निहोत्रं जुहुयात्॥

अथ गोदोहनकाले गोरुपवेशने प्रायश्चित्तम्॥ दोहनकाले वत्सप्रसर्गादिदोहनसमाप्त्यन्तं यदि गौरुपविशेत्तदा. "यस्माद्भीषा निषीदसि० नमोरुद्रायमीढुषे" अनेन तामभिमन्त्र्य "उदस्थाद्देव्यदि" ति "वरुणायच" अनेन मन्त्रेण तामुत्थापयेत्। उभयमपि एककर्तृकम्। अथास्या ऊधसि च मुखे चोदपात्रमुपोद्गृह्य ततस्तां दुग्ध्वा तत्पयो ब्रह्माणं पाययेत्। तदन्नं यावज्जीवं संवत्सरं वा नाऽश्नीयात्। अथ वा तां ब्राह्मणाय दद्यात्॥

अथ दोहनकालीनगवाक्रन्दनप्रायश्चित्तम्॥ दोहनकाले यदि गौः शब्दं कुर्यात् तदा "सूयवसाद्भगव० मुदकमाचरन्ती" इति मन्त्रेण तस्य भक्षं प्रकल्पयेत्॥

अथ दोहनकाले रुधिरस्रावे प्रायश्चित्तम् ॥ शोणितं दुग्धं गार्हपत्ये संस्थाप्य पुनस्तामन्यां वा दुग्ध्वा तेन जुहुयात् ॥

अथ भिन्नभिक्तप्रायश्चित्तम् ॥ स्थालीभेदेन विक्षिप्तं द्रव्यं भिन्नं तत्समग्रं दुष्टं सिक्तं स्कन्दने च यावत् स्कन्नं तद्दुष्टं भवति न पात्रगतम् । तदुभयं दुष्टं "समुद्रं वः प्रहिणोमि० सन्तु गोपते" अनेन मन्त्रेणाभिमन्त्र्याप्सोऽभ्यवहरेत् । दोहनाद्याहोमात्पयसि अन्येषु द्रव्येषु च भेदने पूर्वोक्तेनाभिमन्त्रणं स्कन्दने पुनः पयसि वक्ष्यमाणत्वादिदमभिमन्त्रणं स्कन्दने द्रव्यान्तरेष्वेव भवति ॥

अथ दोहनाद्यवस्थायां स्कन्नप्रायश्चित्तम् ॥ दोहनाद्यवस्थायां पयसि स्कन्ने "यदद्यदुग्धंपृथिवी० अस्तुतन्मयि" अनेनाभिमन्त्रयेत् । पयोलिङ्गत्वात्पयस एव इदं भवति । दोहनाद्याप्राचीनहरणात् । तत्र यत्परिशिष्टं स्यात्तेन जुहुयात् । शेषकार्यापर्याप्तावपि शेषकार्यस्य भक्ष्यादेर्लोप एव स्यात् । तद्यदि प्रधानेऽपर्याप्तं तदा अन्यत्पय आनीय जुहुयात् । अधिश्रिते पयसि स्कन्ने "यदद्यदुग्धमि"ति अनेनैवाभिमन्त्रणं न ब्राह्मणोक्तम् । न द्रव्यान्तरे भवति । विष्यन्दने पयसि ब्राह्मणोक्तम् । तद्यथा । अधिश्रयमाणमारभ्य विष्यन्दने स्कन्दने वा जलेन प्रतिषिच्य तत्स्कन्दनं विष्यन्दिते च दक्षिणेन पाणिना अभिमृश्य जपेत् । "दिवं तृतीयं देवान्यज्ञोगात्ततोमाद्रविणमाष्टं ययोरोजसास्कभिताराजां० पूर्वहुता" इति च । शेषं दुग्धवत् । प्राचीनहरणात्पयस्येव स्कन्दने "प्रजापतेर्विश्वभृतितन्वंहुतमसि" इत्यनेनाभिमृश्य होमापर्याप्तावपि शेषेण जुहुयात् । द्रव्यान्तरे "समुद्रं व" इत्यनेनाभिमन्त्रणे विशेषः । अशेषस्कन्ने यावत्यध्वनि गते तत्रैवोपविश्य अन्ये स्कन्नां स्थालीश्चानीय चतुरुन्नीय जुहुयात् । स्थाल्यामपि यदा नास्ति आज्यं यथावत्संस्कृत्योन्नीय जुहुयात् । आहवनीये आहुति-

द्रव्यापर्याप्तिं प्रायश्चित्तम् । शेषेणं जुहुयादित्यादिषु त्रिषु पक्षेषु यां कां चिद्वारुणीं जपित्वा यया.कया चिद्वारुण्या होमः विशेषाभावात् । "अग्निः सूर्योज्योतिरि" त्येतयोरपवादो वारुणी । अनशनयान्यस्माद्धोमकालाद्यजमानस्य पुनर्होमं च गाणगारिः । पुनर्होमे च पूर्वहोमं समाप्य पुनर्विहरणादि कुर्यात् । पुनर्होम आचार्याणामनभिमतः । इति दोहनादिषु स्कन्दनप्रायश्चित्तम् ॥

यत्राधिश्रितमग्निहोत्रं द्रव्यं शब्दयेत्तदा " समेषपाप्मान" मित्यनेन तद्द्रव्यमभिमृशेत । इति शब्दायमानप्रायश्चित्तम् ॥

अथोद्वासिते विष्यन्दिते "महीद्यौः पृथिवीचन" इत्याहवनीयस्य भस्मान्ते निनयेत । ततः सर्वप्रायश्चित्तम् । "दोहनाद्यवस्थायामपि पयसि विष्यन्दिते इदमेव । केशादिना बीभत्सितमग्निहोत्रद्रव्यं "प्रजापतेनत्वदेतान्यन्य" इति ऋचा मध्यमेन पलाशपर्णेन जुहुयाद्वल्मीकवपायामप्सु वा तूष्णीं प्रक्षिपेत । द्रव्यान्तरमुत्पाद्य होमः । अधिश्रयणाभावोऽप्यन्येषामिदम् । इति बीभत्सप्रायश्चित्तम् ॥

अथाग्निहोत्रद्रव्याभिवर्षणप्रायश्चित्तम् । अग्निहोत्रद्रव्येऽभिवृष्टे "मित्रोजनान्यात० घृतवज्जुहोतस्वाहा" अनया समिदन्तरमाधाय प्रकृतिवद्धोमः । उत्तराहुत्यभिवर्षणे इदमेव वृत्तिकृता उक्तम् । अन्ये तु अग्निहोत्रार्थमग्न्युद्धरणप्रभृति आउत्तरपरिषेकात् अग्निषु वर्षे तदेव प्रायश्चित्तं वदन्ति । तदसत् । अहोत्रद्रव्यप्राये पठितत्वात् ॥

अथोत्तराहुतिकाले द्रव्यस्कन्नप्रायश्चित्तम् । यदि पूर्वाहुतौ हुतायामुत्तराहुतिः स्वस्थानाद्बहिः स्कन्देत तदा " यत्रवेत्थवनस्पते० गामयस्वाहा " इति समिधमाधाय शेषेण जुहुयात । सर्वस्कन्दने तत्रैव स्थालीमानीय पुनस्त्रीनुन्नीय " यत्रवेत्थ इति समिधमाधाय उत्तराहुतिप्रभृति कर्तव्यम् ॥

अथाग्निहोत्रकालात्ययप्रायश्चित्तम् । उद्धृतेष्वग्निषु सायं पूर्वप्रहरत्यागे गार्हपत्ये तूष्णीमाज्यं संस्कृत्य जुह्वां चतुर्गृहीतं गृहीत्वा "दोषावस्तर्नमस्वाहा" इत्याहवनीये जुहुयात् । ततोऽग्निहोत्रमुपसाद्य "भूर्भुवः स्वः" इति जपित्वा गां दत्वा शेषं समाप्य तेष्वेवाग्निषु वारुणीमिष्टिं कुर्यात । तत्र वरुणो देवता। "इमंमेवरुण तत्वायामी" ति याज्यानुवाक्ये । उद्धृतेष्वग्निषु प्रातर्दर्शनादिकात्यये पूर्ववदाज्यं संस्कृत्य जुह्वां चतुर्गृहीतं गृहीत्वा "प्रातर्वस्तर्नमस्वाहा" इत्याहवनीये हुत्वा ततोऽग्निहोत्रमुपसाद्य "भूर्भुवः स्वः" इति जपित्वा अग्निहोत्रं हुत्वा तूष्ण्यन्ते वरदानं कर्तव्यम । समाप्ते अग्निहोत्रहोमे आहवनीयमनुगमयित्वा "इहैवक्षेम्यएधिमाप्रहासीर्देवदत्तजामदग्न्यम" इति मन्त्रमुक्त्वा पुनराहवनीयमुद्धरेत् । पित्रादौ जीवति जामदग्न्यायनमिति वदेत् । दक्षिणाग्निरस्याग्निहोत्रिक एव । ततो मित्रसूर्याभ्यामिष्टिं कुर्यात् । तत्र "अप्रियोमहिनादिवं प्रप्रमित्रमर्तो अस्तुप्रयस्वाने" ति मित्रस्य याज्यानुवाक्ये । "तरणिर्विश्वदर्शतश्चित्रंदेवानामि" ति सूर्यस्य । समाप्तायामिष्टौ पत्नीयजमानौ यतवाचौ भूत्वा तानेवाग्नीन् उपक्षयन्तौ अनश्नन्तौ अहःशेषमुपासीयाताम् । ततस्तेष्वग्निषु द्वयोर्गवोर्दुग्धं पृथगानीय एकमधिश्रित्य तस्मिन्नेव द्वितीयमवनीय श्रपयेत । तेन पयसा अग्निहोत्रं समाप्य अग्न्योरपवर्गः। ततः प्रातरग्निहोत्रं हुत्वा पुनर्विहारादिव्रतभृदिष्टिं कुर्यात् । "त्वमग्नेव्रतभृच्छुचिरग्नेर्देवानिहावह्" "व्रतानिबिभ्रद्व्रतपाअदब्ध" इति याज्यानुवाक्ये । पर्वणि दुःस्वप्नाश्रवणेप्येषैवेष्टिः ।

अथाविहृतेषूक्तकालातिपत्तौ अत्यन्ता यदि अनुद्धृतप्रायश्चित्तं कृत्वा होमं कुर्यात् । अनापदि गार्हपत्ये आज्यं संस्कृ-

त्य चतुर्गृहीतमाहवनीये मनस्वत्या हुत्वा अनुद्धृतप्रायश्चित्तसहितो होमः कार्यः । इति अविहृतेषु कालात्ययप्रायश्चित्तम् ॥

विहृतेषु अहृतेषु होमान्तरकालप्राप्तौ उपक्रान्तहोम एव कालातिपत्तिप्रायश्चित्तसहितं होमं कृत्वा वर्तमानकालीनमनुद्धृतप्रायश्चित्तसहितं होमं कुर्यात् । अविहृतेषु कालान्तरप्राप्तौ मनस्वतीहोमं कृत्वातिपन्नहोमं च कृत्वा अनुद्धृतप्रायश्चित्तसहितो मुख्यकालीनहोमः एवमनेककालातिपत्तावपि द्रष्टव्यम् । विहृतेष्वविहृतेषु वा अनेककालातिपत्तौ मनस्वतीहोमं प्रतिहोमं चावश्यकं कुर्यात् । विहृतेषु तेष्वेवाग्निषु अविहृतेषु चाग्नीन्विहृत्य मनस्वत्यादि कृत्वा प्राप्तकालस्य विहरणादि क्रियेत ॥ इति विहृताविहृतकालात्ययप्रायश्चित्तम् ॥

अथानुद्धरणप्रायश्चित्तम् ॥ यत्राहवनीयमप्रणीतमभ्यस्तमियात् तदा बहुविद्ब्राह्मणमानीय तेनाहवनीयार्थमुद्धृत्य अन्येन दर्भैर्हिरण्यं बध्वा अग्रतो ह्रियमाणे निधानान्तं कुर्यात् । अनुद्धृतमभ्युदिते सति बहुविदग्निमुद्धृत्य जुह्वां चतुर्गृहीतमाज्यं रजते चाग्रतः कृत्वा नयेत् । निहितस्याहवनीयस्य पुरस्तात्प्रत्यङ्मुख उपविश्य " उषाः केतुनाजुषतां स्वाहा " इति अध्वर्युस्तदाज्यं जुहुयात् । सायमनुद्धरणेऽग्निहोत्रहोममारभ्य वारुणीपर्यन्तं सायङ्कालात्ययवत्कुर्यात् । तथा प्रातरनुद्धरणेषु आहवनीयानुगमनवर्जमग्निहोत्रहोममारभ्य व्रातपनीष्ट्यन्तं प्रातःकालात्ययवत्कुर्यात् ॥ इत्यनुद्धरणप्रायश्चित्तम् ॥

अथाहवनीये विद्यमाने गार्हपत्यानुगमनप्रायश्चित्तम् ॥ यत्राहवनीये विद्यमाने गार्हपत्योऽनुगतस्तदा तत्काष्ठानि तूष्णीं मन्थेयुः। विद्यमानमाहवनीयमनुगमयेत् । क्षामाभावे भस्मनारणी संस्पृश्य मन्थयेत् । " इतोजज्ञे० हव्यंवहनः प्रजानन् " इत्यनेन मथि-

स्याहवनीयं पुनस्तूष्णीं प्रणीय "अग्नेसम्राडिषेण्ये० पर्श्चादधत्" अनेन तमुपतिष्ठेत । सर्वावस्थस्य गार्हपत्यस्य मन्थनेनैवोत्पत्तिः ; अथ कल्पान्तरा उच्यन्ते । विद्यमानमाहवनीयं गार्हपत्यं कृत्वा ततः प्राञ्चमाहवनीयमुद्धरेत् । दक्षिणाग्निमपि तत उद्धृत्य दक्षिणतो निदध्यादिति एकः । आहवनीयाद्गार्हपत्यार्थमुद्धरेदिसपरः । गार्हपत्यर्थमन्थनमेव दक्षिणाग्न्याहवनीयौ यथास्थितावित तृतीयः । अथ वा गार्हपत्यार्थं मथित्वा विद्यमानमाहवनीयं दक्षिणाग्निं चानुगमयित्वा पुनः प्रणयेदिति चतुर्थः । अथ वा आहवनीयं भस्मना सहोद्धृत्य दक्षिणतो विहारं पश्चान्नीत्वा गार्हपत्यायतनात् भस्मापोह्य- गोमयेनोपलिप्य अग्निं तत्रैव विधाय आहवनीयायतनमुपलिप्य गार्हपत्यादाहवनीयमुद्धरेन्मन्त्रेण । दक्षिणाग्निमपि तत उद्धृत्य दक्षिणतो निदध्यादिति केचित् । तेष्वेवाग्निषु इष्टिं कुर्यात् । तपस्वाञ्जनद्वान् पावकवान्गुणकोग्निर्देवता । " आयाहितपसाजनेषु आनोयाहितपसाजनेषु " इति याज्यानुवाक्ये ॥

अथगार्हपत्यानुगमनप्रायश्चित्तम् ॥ सर्वावस्थस्य गार्हपत्येऽनुगते भस्मनाऽरणी संस्पृश्य "इतोजज्ञप्रथम" इति मन्त्रेण मथित्वा प्रकृतिवत्प्रणीय अग्नये तपस्वते जनद्वते पावकवतेऽष्टाकपालं पुरोडाशं निर्वपेत् । तत्स्थाने पूर्णाहुतिं वा । "अग्नेतपस्वतेजनद्वतेपावकवतेस्वाहा" इति पूर्णाहुतिं विधाय ततो होमः ॥

अथ दक्षिणाग्न्यनुगतप्रायश्चित्तम् ॥ अनुगतं दक्षिणाग्निं स्वायोनित उत्पाद्य प्रणीय तत आहवनीये पूर्णाहुतिः इष्टिर्वेति पूर्ववत् । अस्य प्रधानहोमोत्तरं नोत्पत्तिः ॥

अथाहवनीयानुगतप्रायश्चित्तम् ॥ प्रणीतमाहवनीयं पूर्णाहुतेः प्राक् अनुगते अग्निर्ज्योतिष्मान्वरुणश्च देवते । "उदग्नेशु-

चयस्त्वाग्नेनेऽहृत्तुपमामूर्ध्वोअस्थादि” ति याज्यानुवाक्येऽग्नेर्ज्योतिष्मतः । “इमम्मेवरुण तत्वायामी” ति वरुणस्य । पूर्णाहुतिर्वा । “अग्नयेज्योतिष्मतेस्वाहा वरुणायस्वाहा” । उत्पत्तिस्तु तदाहुर्यस्याग्निमनुद्धृतमादित्योऽभ्युदियाद्वाऽभ्यस्तमियाद्वा प्रणीतो वा प्राग्घोमादुपशाम्येदित्यादि । हिरण्यं पुरस्कृत्य सायमुद्धरेन्मन्त्रेण रजतमन्तर्द्धाय प्रातरुद्धरेत् मन्त्रेण । इति ब्राह्मणोक्ता उत्पत्तिर्ग्राह्या । हिरण्य उत्तरा जुहुयादिति वचनादुत्तराहुत्यर्थमग्नेर्नोत्पत्तिः ॥

अथाऽनस्तमिते होमप्रायश्चित्तम् ॥ यद्यनस्तमिते अस्तमितभ्रान्त्या होमो भवति तदा तस्मिन्नेवाहवनीये पुनर्होमः । होमोत्तरं यजमानो गार्हपत्याहवनीयावुपतिष्ठेत । “भवतं नः समनसौसमोकसावरेपसौ मायज्ञं हिंसिष्टमायज्ञपतिंजातवेदसौशिवोभवतमद्यनः” इति । एवं प्रातरुदयात् प्राक् होमे ॥

अथ नित्यहोमातिक्रमे प्रायश्चित्तम् ॥ अग्निहोत्रहोमान्मनस्वत्या चतुर्गृहीतं हुत्वा अतिक्रान्तहोमः कार्यः । एवमाद्विरात्रादिषु होमविच्छेदे ज्ञेयम् ॥

अथ सर्वानुगमनप्रायश्चित्तम् ॥ सर्वेषामनुगमने सूर्योऽस्तमियादभ्युदियात्तदाग्न्याधेयं पुनराधेयं वा प्रायश्चित्तम् ॥ एतद्देवसमारूढेषु चारणीनाशेपि । अत्राग्न्याधेयपुनराधेयशब्दाभ्यां सेष्टिके एव गृह्येते । अजस्रपक्षेपि इदमेव । अग्निहोत्रद्रव्याधिश्रयणार्थं गार्हपत्यादुद्धृतेष्वङ्गारेषु यदि उद्धृतस्य गार्हपत्यस्य च नाशस्तदा गार्हपत्यं मथित्वा पूर्ववत्तपस्वतीष्टिः । अपोढे वर्तमाने गार्हपत्यानुगमने अपोढैकदेशं गार्हपत्ये निधाय सर्वप्रायश्चित्तम् । एवं गार्हपत्यदक्षिणाग्न्याहवनीयानुगतेषु तान्येव यथासम्भवं कर्तव्यानि । तथा सति सर्वानुगमन एव अग्न्याधेयं पुनराधेयं वा प्रायश्चित्तम् । न केवलं गार्हपत्यस्यानुगमने गार्हपत्याहवनीययो-

रनुगमने वा ॥

अथ समारूढारणीनाशे प्रायश्चित्तम् ॥ अग्निष्वरण्योः समारूढेषु सत्सु द्वयोरन्यतरनाशे वा अग्न्याधेयं पुनराधेयं वा कर्तव्यम् ॥

अथानेकनिमित्तेषु तत्तद्गुणविशिष्टाग्नेय्य इष्टय उच्यन्ते ॥ तत्रोपवसथ्ये हवनीयजमानपत्न्योर्विनाशिपत्तौ व्रतपतीष्टिः ॥ तत्र व्रतपद्गुणकोऽग्निर्देवता । "त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनाम व्रता-नी"ति याज्यानुवाक्ये । निवृत्तकर्मणा अनिवृत्तकर्मणा वा अग्निना सहितो आहवनीयायतने यदि अन्योऽग्निराहवनीयार्थमुद्धियेत तमनिधायैव स्मरति चेदायतनस्थं व्युदूह्य उद्धृतं निदध्यात् । तत्र अपवृत्ते कर्मोदूह्य तदा व्याहृतिप्रायश्चित्तम । अपवृत्ते उद्धृतस्याग्नेरनिधाने पुनस्तूष्णीं गार्हपत्ये समाप्य सर्वप्रायश्चित्तं कुर्यात् । निधाने वक्ष्यमाणलौकिकाग्निसंसर्गप्रायश्चित्तम । अनपवृत्ते यद्यस्मृत्वैव पूर्वप्रणीतेऽग्नौ निदध्यात् तदा इष्टिः कर्तव्या । तत्राग्निमद्गुणकोऽग्निर्देवता । "अग्निनाग्निः समिध्यते त्वं ह्यग्ने अग्निने"ति याज्यानुवाक्ये ॥ अगारदाहे क्षामवतीष्टिः कर्तव्या ॥ "अग्ने त्वमस्मद्युयोध्यमीवा अक्रन्ददग्निस्तनयन्निव द्यौरि"ति याज्यानुवाक्ये इत्यादयः सर्वे सगुणा आग्नेयेष्टाकपाला ज्ञेयाः ॥ शवाग्निना संसर्गेषु शुचयेष्टिः । "अग्निः शुचिव्रततम उदग्ने शुचयस्तवे"ति याज्यानुवाक्ये ॥ गार्हपत्यादीनां परस्परसंसर्गे विविचयेष्टिः ॥ "त्रिभिर्विष्वग्वातजूतासो अग्ने त्वामग्ने मानुषीरीळते विश" इति याज्यानुवाक्ये । ग्राम्येण संसर्गे संवर्गेष्टिः ॥ "कुवित्सु नो गविष्टये मा नो अस्मिन्महाधने" इति याज्यानुवाक्ये ॥ वैद्युतेनाग्निना संसर्गे अप्सुमतेष्टिः ॥ "अप्स्वग्ने सधिष्टव यदग्ने दिविजा असी"ति याज्यानुवाक्ये । द्विपदन्नभोजने वैश्वानरायेष्टिः ॥ "वैश्वानरो अजीजनत्पृष्टो दिवी"ति याज्यानुवाक्ये । उद्वासनात्प्राक् कपाल्या-

शाने अनुद्वासनपक्षे कर्ममध्येपि येषां श्रवणोत्तरमुद्वासनं तस्मिन्नकृते आश्रावणे कृते च वैश्वानरीयेष्टिः ॥ यजमाने जीवति मृतशब्दं श्रुत्वा सुरभ्येष्टिः कर्तव्या ॥ तत्र सुरभयगुणकोऽग्निर्देवता । सूत्रे एवकारपाठान्न सुरभिमतः । "अग्निर्होतान्यसीदद्यजीयान्त्सा-ध्वीमकर्देववीतिन्नोअद्य" ति याज्यानुवाक्ये ॥ यस्य भार्या गौर्वा यमौ जनयेदिष्टिर्मरुतः ॥ मरुतो देवता । "मरुतोयस्यहिक्षयेपशद्धायमरुतायस्वभानव" इति याज्यानुवाक्ये ॥ इत्याग्नेय्य इष्टयः ॥

अथाऽकाले दर्शारम्भप्रायश्चित्तम ॥ यद्यकाले दर्शारम्भे अकालोयमिति ज्ञात स एव दर्शस्त्रेधातवीयेष्ट्या समाप्येत । पृथग्न्वन्तावित्यमावास्याधर्मा भवन्ति । तत्र देवता दाता अग्नेर्गुणकः । प्रदाता इन्द्रस्य । शिपिविष्टो विष्णोः । "अग्नेदादाशुषेरयिंसयन्ताविमएषामि" त्यग्नेर्दातुः । "दीर्घस्तेअस्त्वङ्कुशोभद्रातेहस्तासुकृतातपाणी" इतीन्द्रस्य प्रदातुः । "वषट्वेविष्णवासआकृणोमिप्रततेअ-द्यशिपिविष्टनामे" ति विष्णोः शिपिविष्टस्य । अत्र पुनर्योगो नास्तीति अध्वर्युभिः सह निश्चयः ॥ अत्र प्रायश्चित्तप्रकरणे सूत्रोक्ता ब्राह्मणोक्ता इष्टयः । तासां देवतानां प्रतिदैवतं तस्यै तस्यै देवतायै द्वादश गृहीतेन स्रुचं पूरयित्वा चतुर्थ्यन्तेन देवतानाममन्त्रेण पूर्णाहुतिं जुहुयात । इदं तु कर्ममध्ये वा अशक्तौ वा अनारब्धदर्शपूर्णमासस्य वा भवन्ति । आरब्धदर्शपूर्णमासस्य च इष्टिः पूर्णाहुतिर्वा ॥ इतीष्टानुकल्पः ॥

अथ हविस्कन्दनप्रायश्चित्तम ॥ यदि हविः स्कन्नं तदा "देवांजनमगन्य०द्रप्सश्चस्कन्द" । इत्येतदन्तेन मन्त्रेण सर्वत्र स्कन्नमभिमृशेत । सर्वप्रायश्चित्तञ्च ॥

अथाहुतेर्बहिस्कन्नप्रायश्चित्तम ॥ अथ हूयमानाहुतिः यदि परिधेर्बहिः पतेत्तदा तस्याः स्कन्नं पूर्ववदभिमर्शने कृते आग्नीध्रस्ता-

मादाय तूष्णीमेव जुहुयात्। आग्नीध्राय येन केनचिद्द्रव्येण र-सादिना वा पूर्णपात्रं दद्यात्। सर्वप्रायश्चित्तं च॥

अथानेकविपर्यासप्रायश्चित्तानि॥ देवताविपर्यासो नाम आ-वाहनादिषु व्युत्क्रमः। अनुवाक्याविपर्यासो नाम अन्यदिष्ट-मन्यस्यानुब्रूयात्। एवं याज्याविपर्यासे जौहवौपभृतयोराज्य-विपर्यासे ध्रौवाज्यविपर्यासेऽपि। अवदानविपर्यासो नाम मध्या-त्पूर्वार्द्धादित्यादिषु वैपरीत्यम्। हविर्विपर्यासो नाम निर्वापादिषु व्युत्क्रमः। अन्यदीयेन हविषा अन्यस्य यागो वा। एतेषु सर्वे-षु "यद्वो देवा अति० तन्निवेतनस्वाहा देवेभ्य इदं"० इत्याज्या-हुतिं हुत्वा हुतवते ब्रह्मणे मुख्यं धनं दद्यात्। मुख्यं धनं नाम सद्यो गृहे यत्प्रधानभूतं च। एतेषु निमित्तेषु प्रधानयागोत्तरं स्मृ-ते सति यद्वो देवा सर्वप्रायश्चित्तं च न यागाभ्यासः॥ इति वि-पर्यासप्रायश्चित्तम्॥

अथ प्रधानदेवतामनावाह्य देवतान्तरायप्रायश्चित्तम्॥ दे-वतावाहनकाले विहितदेवतामनावाह्य उत्तरं कर्म कुर्यात्तदा या-वति गते स्मरति तदवधिस्वरेण विहितामावाहयेत्। मनसावाह-येदित्येके। यद्यविहितामावाहयेत्तदा यस्मिन्नेव क्रमे निगदादिषु पठितास्तेनैव क्रमेण चतुर्गृहीतेनाज्येन तां यजेत्॥

अथ हविरपक्वप्रायश्चित्तम्॥ यदा हविरपक्वं स्यात्तदा ते-नैव प्रक्रान्तं समाप्य दक्षिणाग्निं पुनर्विहृत्य चतुःशरावपरिमि-तव्रीहिभिः ओदनं श्रपयित्वा चतुरो ब्राह्मणान् भोजयेत्॥

अथ हविष एकदेशदाहे कृत्स्नदाहे वा प्रायश्चित्तम्। यदा यद्धविर्दग्धं तदेकदेश अवदानपर्याप्तः स्यात्तदा तेनैव प्रकृतं समाप्यैतस्मिन्प्रयोगे दक्षिणा द्रष्टे दातव्या न ऋत्विग्भ्यः। पुनर-न्याधानादि तद्देवत्यो यागः कर्तव्यः। अवदानपर्याप्ते सर्वप्राय-

श्चित्तमेतन्न पुनर्यागः । एवं द्वयोर्बहूनां ज्ञातव्यम् । यदा कृत्स्नं दग्धं तदा तस्मिन्नेव प्रयोगे निर्वापादिना तद्धविरुत्पाद्य प्रकृतं समापयेत् । इयं न पुनरावृत्तिः ॥

अथावाहनात्प्राक् हविर्दोषप्रायश्चित्तम् ॥ आवाहनात्प्राग्घविर्दोषे सति आवृत्तिरेव । अङ्गहविषां दोषे सति कर्मसमाप्तिपर्यन्तं पुनरुत्पत्तिरेव । आवाहनादूर्ध्वं प्रधानहविषां व्यापत्तौ यदुक्तं तस्य विधिः स्विष्टकृतः प्रागेव तेनाप्यत्राङ्गानां पुनरावृत्तिरेव ॥

अथ गृहीतावदानदोषप्रायश्चित्तम् ॥ मध्यात्पूर्वार्द्धाद्गृहीतं यदि दुष्टं भवति तदा सर्वप्रायश्चित्तं हुत्वा पुनस्तत एव मध्यात्पूर्वार्द्धाद्गृहीत्वा यजेत् । सर्वेषु कर्मसु विहितदक्षिणादानाशक्तौ उर्वरां दद्यात् । उर्वरा नाम सस्यसंपन्ना भूमिः । विहितदक्षिणाकालातिक्रमे एषा दक्षिणेति केचित् ॥

अथ कपालभेदनप्रायश्चित्तम् ॥ यदि पुरोडाशश्रपणात्प्राक् कपालं भिन्नं तदा "गायत्र्यात्वाशताक्षरयासंदधामि" इति सन्धानद्रव्येण सन्धाय सर्वप्रायश्चित्तं हुत्वा "अभिन्नोघर्मोजीरदानु० यत्नोयप्येतुदेवान्" इति द्वाभ्यामप्सु प्रक्षिपेत् । सर्वप्रायश्चित्तं कृत्वा अन्यत्कपालमानीय यथापूर्वं संस्कारं कृत्वा मन्त्रेण तत्र निधाय पुरोडाशं श्रपयेत् ॥ श्रपणोत्तरकालभेदने न तत्प्रायश्चित्तम् ॥

अथ कपालाशुचिसंबन्धप्रायश्चित्तम् ॥ यदि कपालानि श्वादिभिर्दशनाक्षिप्तानि अशुचिना वा स्पृष्टानि तदा "अभिन्न" इति द्वाभ्यामेवाप्सु प्रक्षिपेत् । सर्वप्रायश्चित्तं च ॥

अथ कर्ममध्ये मृण्मयसाधारणप्रायश्चित्तम् ॥ अथान्यानि मृण्मयानि दुष्टानि "भूमिर्भूमिमगा० द्वेष्टिसमिध्यतां" इति मन्त्रेणाप्स्वेव प्रक्षिपेत् । सर्वप्रायश्चित्तं च ॥

अथ पुरोडाशभेदनोत्पतनप्रायश्चित्तम् ॥ यदि पुरोडाशो

भिद्येत उत्पतेत वा तदा "किमुत्पतसि किं० स्वमासीदसदनंस्वं" इति मन्त्रेण बर्हिष्येनं निधाय "माहिंसीर्देवप्रेरितआ० अस्मिन्नासीदबर्हिषि "अनेन तमभिमन्त्र्य सर्वप्रायश्चित्तं कुर्यात् ॥

अथोद्धरणकाले समारूढमथ्यमानाऽग्नेरनुत्पत्तिप्रायश्चित्तम् ॥ यदि समारूढोग्निः प्रणयनकाले मथ्यमानो न जायेत तदा लौकिकमानीय गार्हपत्ये निधाय ततः प्रणीय तत्रैवाग्निहोत्रं जुहुयात् । एतदनुगते न भवति । अनुगते तु मन्थनादि तपस्वतीष्ट्यन्तं तत्र प्रायश्चित्तम् । अनुगतादजायमानेपि यावज्जन्म तावन्मथितव्यमेव । ततस्तपस्वतीष्टिः । ततोग्निहोमोनुदुधृतप्रायश्चित्तेन सह यदि होमकालोतिपन्नस्तदा मनस्वतीहोमश्च कार्यः । अनुगतपक्षेपि लौकिकाग्नौ होम इति केचित् ॥

अथाग्न्यभावे ब्राह्मणपाण्यजकर्णदर्भस्तम्बाप्सु ॥ काष्ठेषु पृथिव्यादयो ग्राह्याः । पाण्यादीनां चतुर्णामिन्धानाश्रपणादिदृष्टार्थान्विर्जयित्वा अन्यत्सर्वमदृष्टार्था भवन्ति । पृथिव्यामाहुतिधारणार्था सामित्र भवति । पूर्वालाभेषु उत्तरोत्तरेषु उक्तप्रकारेणाग्निहोत्रहोमं हुत्वा अनन्तरं तदैव मन्थयेत् । न पुनर्होम इति । पाणिहोमे ब्राह्मणस्यामावरोधः । कर्णे त्वजमांसं वर्जयेत् । स्तम्बे चेद्दर्भेनाधिशयीत । अप्सु चेत्सम्यगमम्याग्निवेको न । एतत्संवत्सरव्रतं यावज्जीविकं वा ॥ इत्यग्न्यभावप्रायश्चित्तम् ॥

अथ पूर्वाहुत्यनन्तरमाहवनीयानुगमने प्रायश्चित्तम् ॥ उत्तराहुतिकाले अग्न्यनुगमने आयतने हिरण्यं निधाय तत्रैवोत्तरां जुहुयात् ॥

इति श्रीमंचनार्यभट्टविरचितायामाश्वलायनसूत्रप्रयोगदीपिकायां तृतीयोध्यायः ॥

अथ सप्तसंस्थो ज्योतिष्टोमाख्यः सोमसंस्तत्प्रयोगोऽभिधीयते ॥

तत्र सत्रेष्वामेकाहाहीनसत्राणां 'नानाप्रकृतिभूतः परिमितशस्योऽग्निष्टोमसंस्थो ज्योतिष्टोमस्तावदुच्यते ॥ तस्यादौ ऋत्विग्वरणसमये "अमुकशर्मणः सोमो भविष्यति तत्र भवता हौत्रं कर्तव्यमि"ति सोमप्रवाकेणोक्ते होता "को यज्ञः क ऋत्विजः को दक्षिणे"ति तं पृच्छति। तेन प्रतिवचने दत्ते "अग्निर्मेहोते"त्येवमादिना मन्त्रेण यजमानो होतारं वृणीते । स वृतो जपेत् "महन्मेवोच" इत्यादि "तेन भुक्षिषीये" त्यन्तं जपित्वा "अग्निष्टेहोतास तेहोतारहोताहंतेमानुष" इति मन्त्रेणाभ्युपगच्छति । होत्रकाणामप्येवं वरणविधिः । अयं तु विशेषः । "आपस्तेहोत्राशंसिन्यस्तास्तेहोत्राशंसिन्योहोत्रकावयंतेमानुषा" इति सर्वे युगपत्प्रतिजानीते । एवमृत्विजो वृत्वा वरणक्रमेणैव तावन्मधुपर्केण पूजयेद्यजमानः । तत्रास्मदीयानां होत्रादीनामाश्वलायनोक्तविधिना मधुपर्को भवति । स उच्यते । पूर्वमेव विष्टरः पाद्यमर्घ्यमाचमनीयं मधुपर्को गौरिति एतावद्द्रव्याणि उपकल्प्य होतारमासने प्राङ्मुख उपविश्य प्रथमं विष्टरं निवेदयेत् । "विष्टरः" इति ति त्रिरुक्त्वा "प्रतिगृह्यता" मिति वदेत् "प्रतिगृह्णामि" इति होता तं गृहीत्वा । "अहंवर्ष्मसजातानांविभिदासति" अनेनोदगग्रं विष्टर उपविशेत् । तत "पाद्यम्" इति त्रिरुक्त्वा निवेदयति । "अर्घ्यमि" ति त्रिरर्घ्यम् । "आचमनीयमि" ति आचमनीयं शुद्धोदकं निवेदयति । होता तद्गृहीत्वा तस्यैकदेशम् "अमृतोपस्तरणमसी" ति मन्त्रेणाचमेत् । ततः शौचार्थमाचमनं कर्तव्यम् । अथाह्रियमाणं मधुपर्कं "मित्रस्यत्वाचक्षुषाप्रतीक्षे" इति मन्त्रेण होताऽवेक्षेत । दधनि मध्वानीय सर्पिर्वा मध्वलाभे तत्कांस्यपात्रे कृत्वा कांस्यपात्रेणैव पिधाय "मधुपर्क" इति निवेदयति । होता "देवस्यत्वे" ति मन्त्रेणाञ्-

लिना प्रतिगृह्य " मधुवाताऋतायत " इति तृचेनावेक्ष्य अनामिकया चाङ्गुष्ठेन च त्रिः प्रदक्षिणमालोड्य " वसवस्त्वागायत्रेणच्छन्दसाभक्षयंत्वि " ति पुरस्तान्निमार्ष्टि । " रुद्रास्त्वात्रैष्टुभेनच्छन्दसाभक्ष० " दक्षिणतः । " आदित्यास्त्वाजागतेनच्छन्दसा० " पश्चात् । " विश्वेत्वादेवाआनुष्टुभेनच्छन्दसा० " उत्तरतः । " भूतेभ्यस्त्वे " ति मध्ये त्रिरुदुगृह्य । " मन्त्रस्यावृत्त्या ऊर्ध्वं क्षिपति । मधुपर्कस्यैकदेशं गृहीत्वा " विराजोदोहोसी " ति प्रथमं प्राश्य आचम्य पुनः किञ्चिद्गृहीत्वा " विराजोदोहमशीये " ति द्वितीयं प्राश्याचम्य " मयिदोहदोहः पाद्यायैविराज ". इति तृतीयं प्राश्याचम्य पूर्वावशिष्टाचमनीयस्यैकदेशं गृहीत्वा " अमृतापिधानेमसी " ति पिबेत् । शौचार्थमाचमनं कृत्वा पुनस्तदेवाचमनशेषं " सत्यंयशश्रीर्मयिश्रीःश्रयतामि " ति पिबेत् । शौचार्थमाचमनं कृत्वा । अथ "गौर्गौर्गौ" रिति त्रिरुक्त्वा गां निवेदयति । होता " मातारुद्राणामि " ति ऋचं जपित्वा " ॐमुत्सृजते " ति ब्रूयात् । ततोस्मिन्नेवकाले गन्धमाल्यवस्त्राभरणानि ददाति । एवमेव प्रशास्त्रादीनां मधुपर्कः ॥ अथ प्रकृतस्य ज्योतिष्टोमस्य प्रयोगोऽनुसन्धिष्यते ॥ यत्र सोमः साग्निचित्यः तत्र अग्निचयननिमित्तोखासम्भरणीयेष्टिः केषांचिन्मते भवति । तस्यां देवताः अग्निर्ब्रह्मण्वान्, अग्निः क्षत्रवान्, अग्निः क्षत्रभृत् इति तिस्रः । " एतेनाग्नेब्रह्मणा वावृधस्व ब्रह्मचतेजातवेदोनमश्च " त्यग्नेर्ब्रह्मण्वतो याज्यानुवाक्ये । " पुरूण्यग्नेपुरुधात्वायासचित्रचित्र " मित्यग्नेः क्षत्रवतः । " अग्निरीशेबृहतः क्षत्रियस्याग्निर्वाजस्यपरमस्यरायः " इत्यग्नेः क्षत्रभृतः । पौर्णमासवदन्यत् । उखासम्भरणीयाप्रभृतीनि कर्माणि आपनस्थ्यपर्यन्तानि तेषूत्तरोत्तरं यत्कर्म तत् पूर्वस्मात्कर्मणोऽन्यूनस्वाङ्ग

भवति । उखासम्भरणीयमपि कर्म पौर्णमासाच्छनैस्तरां भवति । एतच्छनैस्तरत्वं प्रधानसममेवेति वेदितव्यम् । अङ्गेषु तन्त्र एव । यत्र पुनरिष्टिर्नास्ति तत्र दीक्षणीयाप्रभृतिषूत्तरोत्तरं कर्म शनैस्तरं भवति।

अथ साग्निचित्ये एव क्रतौ प्राजापत्यः पशुः । अग्निनिमित्तः तस्य वायव्यः पशुपुरोडाशो भवति । एषाश्वलायनमतिः । आपस्तंबानां तु वायवे नियुत्वते श्वेतः पशुर्भवति । प्राजापत्यः पुरोडाशः । तस्यैन्द्राग्नवत्कल्पः । विशेषस्तूच्यते । आवाहने वैकल्पिकाज्यभागावाहनानन्तरं " वायुंनियुत्वन्तमावह वनस्पतिमावह देवा " इत्यादि । प्राजापत्ये पशौ तु " समिद्धोअद्य " ति जामदग्न्य एव सर्वेषामाप्रिया भवन्ति इत्युक्तं पूर्वमेव । वपायोगे " आवायोभूपशुचिपा " इत्यनुवाक्या । "होतायक्षद्वायुंनियुत्वन्तंच्छागस्यवपायामेदसोजुपताम " ति प्रैषः । " पीवोअन्नारयिवृध " इति याज्या । प्राजापत्यः पशुपुरोडाशस्तस्योपांशु प्रचारः । " यआत्मदाबलदा " इत्यनुवाक्या । "हो०त प्रजापति०उ पुरोडाशस्यजुपताम"त्युपांशु उच्चैर्वा । "हविर्होतर्यजे " ति प्रैषः । " येनद्यौरुग्र " ति याज्या । अथाङ्गानाम् । " आनोनियुद्भिः शतिनीभिरध्वरम " ति अनुवाक्या । " होता०वायुंनियुत्वन्तंच्छागस्यहविप आददत्य० यमन्नूनं० करदेवंवायुर्नियुत्वाञ्जुपताम " ति प्रैषः । " प्रवायुमच्छ " ति याज्या । वनस्पतिस्विष्टकृत्सूक्तवाकप्रैषेषु आवाहनवद्देवता निगमयेत् । अन्यत्सर्वमैन्द्राग्नवत् ॥

अथ साग्निचित्ये अनग्निचित्ये च दीक्षणीयेष्टिः ॥ तस्याः प्रयोगः । सामिधेनीषु धाय्ये " अग्नेमग्नआवह सोममावह अग्नाविष्णूआवह देवांआज्यपां आवह " त्यादि । पञ्चमे प्रयाजे " स्वाहाग्निं स्वाहा सोमं स्वाहा अग्नाविष्णू स्वाहा देवांआज्य-

पा " इत्यादि । वार्त्रघ्नावाज्यभागौ । प्रधानस्य " अग्निर्मुखं-प्रथमो० हविरागच्छतनः ॐउच्चैः येहेअग्नाविष्णू अग्निश्चविष्णोः तपउत्तमं० यजमानायधत्तां वौषट् " विराजौ स्विष्टकृतः संयाज्ये " ये ३ यजे: प्रि० सोमस्याप्रि० दू अग्नाविष्णोः प्रि० दू देवानामि " त्यादि । दीक्षणीयाप्रभृतिषु इष्टिषु मार्जनं न भवति पुरस्तादुदयनीयायाः । इदप्राशीडायां सूक्तवाके चायुराशीस्थाने भवति । तद्यथा । "उपहूतोयंयजमानोस्ययज्ञस्यागुरुरनुद्दृचमशीयेत्याशास्तेयदेनेनहविषाशास्त" इत्यादि । सूक्तवाके नात्र नामः । आमवनीयपाशिडाया ऊर्ध्वं प्रकृत्या संस्थाजपवर्जम् । अन्यत्सर्वं पौर्णमासवत् ॥ आज्येडान्ता दीक्षणीया । साग्निचित्ये सोमे त्वयं विशेषः । अग्नाविष्णू वैश्वानरः आदित्येभ्यः भुवद्भ्यः भुवनपतिभ्यः एतेषां त्रयाणां विकल्पः । सरस्वती अदितिर्वा द्वयोर्विकल्पः । एवमग्नाविष्णुसहिताश्चतस्रः प्रधानदेवता भवन्ति । अग्नाविष्णोरुक्ते याज्यानुवाक्ये । "वैश्वानरोअजीजनत्पृष्टोदिवी" ति वैश्वानरस्य । "धारयन्तआदित्यासोजगस्था" इति द्वे आदित्यानाम् । एते एव भुवद्भ्यो भुवनपतिभ्यो वा । "पावकानः सरस्वतीयावःरित्रीकन्याचित्रायुरि" ति सरस्वत्याः । "उतत्वामदितेमहीसुष्टि" त्यदितेः । इति बौधायनसंमतिः । आपस्तंबमते तु अग्नाविष्णू, अग्निर्वैश्वानरः, अदितिः, इति तिस्रः प्रधानदेवताः । उक्तास्तासां याज्यानुवाक्याः । अन्यत्समानम् । एका तिस्रो वा दीक्षाः ॥

अथ प्रायणीया ॥ सा शंय्वन्तानाज्यभागान्यदि पूर्वकारिणः कुर्वन्ति तथासति आवाहने अनाज्यभागेऽयं विशेषः । "पथ्यांस्वस्तिमग्नआवह अग्निमावह सोममावह सवितारमा० अदितिमावहदेवांआज्यपां" इत्यादि । पञ्चमे प्रयाजे "ये०.हस्वाहा प-

थ्यांस्वस्तिस्वाहाअग्निस्वाहा सोमंस्वाहासवितारंस्वाहाअदितिंस्वाहादेवाआज्यपा" इत्यादि। प्रधानस्य। "स्वस्तिनः पथ्यासुधन्वंस्वि" ति द्वे पथ्यायाः स्वस्तेः। "अग्नेनयसुपथारायेआदेवानामपिपन्थामि" त्यग्नेः। "त्वंसोमप्रचिकितोयातेधामानिदिवियामि" ति सोमस्य। "आविश्वदेवंसत्पतिंयइमाविश्वाजातानी" ति सवितुः। "सुत्रामाणंपृथिवीमहीमूषुमातरमि" त्यदितेः। अथ स्विष्टकृतः। "सेदग्निरग्नीरत्यस्त्वन्यामि" त्यनुवाक्या। "येय० हेग्निं स्विष्टकृतमयाडग्निः पथ्यायाः स्वस्तेः प्रिद्र० अग्नेः प्रि० द्रसोमस्य प्रि० द्रसवितुः प्रि० द्र अदित्याः प्रि० द्रदेवतामि" त्यादि। "जुषंताहविः सेदग्नि" रिति याज्या। इडायां पूर्ववत्। सूक्तवाके च। "पथ्याः स्वस्तिः इदंहविरि" त्यत्र पूर्ववत् शंयुवाकान्तं न पत्नीसंयाजाः॥

अथ राजक्रयः॥ संस्थितायां प्रायणीयायां राजानं क्रीणीते तत्र ब्रह्मा दक्षिणत आस्ते। अध्वर्यवः सोमं मनसि कृत्वा नयन्ति। तदा होता शुचिर्भूत्वा अनसः पश्चात्त्रिपदमात्रे देशे चक्रेण वर्त्मना अवस्थाय प्रेषितः सन् "त्वंविप्रस्त्वंकाविरि" त्यनेन मन्त्रेण पादस्य प्रपदेन दक्षिणस्यां दिशि पांसूंस्त्रिरुद्वपेत्। पार्ष्णिमचालयन्सकृन्मन्त्रेण द्विस्तूष्णीम्। अथाभिहिंकृत्य मन्द्रस्वरेण सोमप्रवहणीया अन्वाह। प्रायणीयावत्सोमप्रवहणमित्युक्तत्वात्। "भद्रादभिश्रेयः प्रेही" त्येतामृचं तिष्ठन्ननुब्रूयात् त्रिः। अस्यास्तृतीये प्रवने अर्द्धर्चेऽवस्येद्यावदध्वर्य्यवो न गच्छन्ति। गच्छत्सु तिष्ठन्नेव शिष्टार्द्धर्चमुक्त्वा चक्रवर्त्मनी अन्तरेणैवानुव्रजन्नुत्तरा अनुब्रूयात्। "सोमयास्तेमयोभुव" इति तिस्रः। "सर्वेनन्दन्ती" त्येका। "आगन्देवऋतुभिर्वर्धतुक्षयमि" त्यर्द्धर्च आरमेत्। अथ पत्नीशालायाः अग्रतः उदङ्मुखं नाम व्यवस्थिते तस्य दक्षिणपार्श्वेन गत्वा

राजानमभिमुखोऽवतिष्ठेत । दूराद्दण्डस्य आप्रपदनात् । प्रपाद्यमाने राजनि शकटमग्रेणातिक्रम्य राजानमनुव्रजन् "सनः क्षपभि" रित्यर्धर्चेन "यातेधामानिहविरायजन्ती" त्येतामृचमुपसन्तनोति । अर्धर्च आरभेत । यावद्राजनि संधानं भवति । निहिते राजनि "गयस्फानः प्रतरणः इमांधियंशिक्षमाणस्ये" त्येतामृचमुपसन्तत्य तया परिदध्यात् । राजानमुपस्पृशेन् वमनेषु वा प्रक्रमस्थाने गत्वा तिष्ठन्नेव "भूर्भुवः स्वरि" ति वाचं विसृजेत । निष्क्रमप्रेषेषु तथैवं वाग्विसर्ग इत्युक्तत्वात । ब्रह्मा तु बहिर्वेदि यां दिशं व्रजेत् कर्तारस्तां प्राचीं कृत्वा तद्दक्षिणतो व्रजेयुः ॥

अथातिथ्येष्टिः ॥ होतामन्त्रितः स्थानाचमने कृत्वा तीर्थेन प्रविश्य अग्निमन्थनीया अन्वाह । यज्ञवदेत्युक्तन्यायेन । सामिधेनीषु धाय्ये भवतः । आवाहने "अग्निमग्नआवहसोममावह विष्णुमावह देवांआज्यपामि" त्यादि । पञ्चमे प्रयाजे "ये० स्वाहासोमंस्वाहाग्निस्वाहासोमंस्वाहाविष्णुंस्वाहादेवा" इत्यादि । "समिधाग्निंदुवस्यत आप्यायस्वसमेतुत"इत्यातिथिमन्तावाज्यभागयोः पुरोनुवाक्ये । नित्ये याज्ये । प्रधानस्य । "इदंविष्णुर्विचक्रमे तदस्यप्रियमभिपाथोअश्यामि" ति विष्णोर्याज्यानुवाक्ये । स्विष्टकृतः "होतारंचित्ररथमि" त्यनुवाक्या । "ये० ग्निस्विष्टकृ० डग्ने० प्रि० दूसोमस्याप्रि० डविष्णोः प्रि० डदेवानामाज्यपानामि"त्यादि । "जुषतां हविः प्रमायमि" ति याज्या । इडा पूर्ववत् । स्वरस्तु प्रथमयमः । वषट्कारे द्वितीययमः । इडान्तेयमिष्टिः । सौमिकस्य सर्वा अपीष्टय उपांशु भवन्ति । सौमिकस्य इत्युक्तत्वात । प्रायणीयायां पथ्यां स्वस्तिअग्नआवहेत्यत्राग्निशब्द उच्चैर्भवति । संस्थितायामातिथ्यायामृत्विजः सर्वे तानूनप्त्रमाज्यमभिमृशन्ति । तस्य क्रमः । होता मैत्रावरुणो ब्राह्मणाच्छंसी पोता नेष्टा अच्छावाको ग्रावस्तुदाग्नीध्र

इत्येते आश्वलायनमार्गेण अभिमृशंति "अनाधृष्टमि" तिमन्त्रेण । तानूनप्तृप्रभृति आवभृथविमर्जनान्तमन्योन्यं द्वेषादि न कर्तव्यम् ॥ अथ स्पृष्टोदकं राजानमाप्याययन्ति । "अंशुरंशुष्टेदेव" इति मन्त्रेण । इदमाद्युपसत्सु उदकोपस्पर्शनं यत्र यत्र विधीयते तत्र तत्र मदन्तीभिरेव कर्तव्यम् । सौम्याप्यायनं नाम अद्भिः संस्पर्शनम् । स्पृष्टोदकं निन्हवन्ते प्रस्तरेण पाणीन्निधायोत्तानान्दक्षिणान्त्सव्यान्नीचः "एष्टाराय" इति मन्त्रेण । निन्हवो नाम द्यावापृथिवीभ्यां नमस्करणम् ॥ अथ प्रवर्गेषु प्रचरिष्यन्त्सु पूर्वकारिषु होता तीर्थेन प्रविश्य स्पृष्टोदकमुत्तरेण स्वयं गत्वा पश्चादस्य निरसनोपरशने कृत्वोपविशेत् । तत अध्वर्युणा "ब्रह्मन्प्रवर्गेणप्रचरिष्याम" इति प्रेषितः ब्रह्मा "भूर्भुवः स्वर्बृहस्पतिप्रसूत" इति जपित्वा "ॐ प्रचरत" इत्युच्चैरनुजानाति । सर्वत्र यथाकर्म त्वादेशा इत्युक्तत्वात् । ततोऽभिष्टुयाद्धोता ऋगावानमृचमृचमनवानमुक्त्वा प्रणुत्यावस्येत् । मध्यमस्वरेण वोत्तमस्वरेणाभिष्टुयात् ॥ मध्यमादि धर्मे इत्युक्तत्वात् । पूर्वपटलस्य मध्यमस्वर उत्तमस्य उत्तम इति केचित् । अभिहिंकृत्य "ब्रह्मजज्ञानंप्रथमंपुरस्तादि"ति त्रिः "इयंपित्र्याराष्ट्र्ये" त्येका "महान्महीअस्तभाये"त्येका "अभित्यंदेवसवितार" इत्येका । अस्यां कृपास्वमृपास्वरिति पदविकल्पः । इति चतस्रः कल्पजाः ।अथ साद्यमाने महावीरे "संसीदे"त्येकां ब्रूयात् । आञ्ज्यमाने महावीरे "अञ्जन्तियंप्रथयन्त"इति ब्रूयात् ।सादनाञ्जनयोर्विपर्यासे ऋग्विपर्यासो भवति । "पतंगमक्तमसुरस्यमायये" ति द्वे "योनः सनुत्योअभिदासदग्न" इति द्वे " भवानोअग्नेसुमनाउपेताविं" ति द्वे "कृणुष्वपाज" इति पञ्च । "परित्वागिर्वणोगिरः" त्येकद्रूतीष्वानीयमानासु ऋक् । "अधिद्वयोरदधा" इत्यृक् । "यद्रूत्सद्रेसमिधौविरनीदधातीशुक्रंनेअन्यादि" त्येका । सुवर्णरुक्मे उ-

पर्यीयमाने "अपश्यं गोपामनिपद्यमानमि" त्येका। कृष्णाजिनपवित्रादाने "सक्षेद्रप्सम्ये" ति नवर्चं सूक्तम्। "अयंवेनश्चोदयदि" त्येका। "पवित्रन्तोवितततंब्रह्मणस्पत" इति द्वे। "त्रियत्पवित्र" इत्येका कल्पजा। "गणानांत्वे" त्येकोनविंशर्चं सूक्तम्। "अपश्यंत्वे" ति तृचं सूक्तम्। अस्याद्यया यजमानमीक्षते। द्वितीयया पत्नीम्। तृतीययात्मानम्। "काराधद्धोत्राश्विनावामि" ति नवर्चं सूक्तम्। "आभात्यग्निरि" ति पञ्चर्चम्। "ग्रावाणेवे" त्यष्टर्चम्। "इडेद्यावा" इति पञ्चविंशर्चं सूक्तम्। अस्य सूक्तस्योत्तमायाः पुरस्तात् "अरूरुचउषस" इत्येकामावपेत्। अस्याश्चोत्तरेणार्धर्चेन पत्नीमीक्षेत। "द्युभिरक्तुभिः परिपातमि" त्येतया परिदधाति। अथाध्वर्यवो होतारमुत्थाप्य मन्त्रान्वाचयन्ति। तान्ब्रूयात्॥ इति पूर्वपटलम्॥

अथोत्तरपटलम्॥ उपविष्टेषु ब्रह्मादिषु धर्मदुघामाह्वयति॥ अध्वर्यु "र्गङ्ग एही" ति आह्वयति। स एव संप्रैषः उत्तरस्य पटलस्य। अथ होता अनभिहिंकृत्य "उपह्वयेसुदुघांधेनुमेतामि" ति द्वे। आद्यां त्रिर्ब्रूयात्। "अभित्वादेवसवितरि" त्येका। "समीवत्सन्नमातृभिरि" त्येका। "संवत्सरइवमातृभि" रित्येका। "यस्तेस्तनःशशयोयोमय" इति स्तनं वत्सो धावति प्रस्रावनार्थम्। "गौरमीमेदनुवत्संमिषन्तं नमसेउपसीदत सञ्जानाना उपसीदंनभिज्ञु आदशभिर्विवस्वतः दुहन्तिसदाकामि" ति चैकपातिन्यः। "समिद्धो अग्निरश्विने" त्येका। समिद्धो अग्निर्वृषणारातिर्दिव" इत्येका। एते द्वे कल्पजे। "तदुप्रयक्षतममस्य कर्म आत्मन्वन्तभोदुह्यत घृतं पयः उत्तिष्ठब्रह्मणस्पत" इत्येकपातिन्यः। एतामुक्त्वावतिष्ठते। दुग्धायाम् "अधुक्षत्पिप्युषी" त्येतां ब्रूयात्। आह्रियमाणायां "उपद्रवपयसे" ति कल्पजा एका। "आनूनमश्विनोः" गव्ये

आसिच्यमाने । आज्ये पर्यासि आसिच्यमाने " आस्तुतेसिक्षते"ति ब्रूयात् । आसेचनविपर्यासे ऋग्विपर्यासः । उभयोरासिक्तयोः "समुत्येमहती" ति ब्रूयात् । महावीरमादायोत्तिष्ठत्सु अध्वर्युषु "उदुष्यदेवः सविताहिरण्यये"त्यनूत्तिष्ठेत् । " प्रैतुब्रह्मणस्पति"रित्यनुव्रजेत् । " गन्धर्व इत्यापदमस्यरक्षती"त्यनया खरस्य पश्चात्प्राङ्मुखस्तिष्ठन् खरमवेक्षते । तं परिक्रम्य व्रजित्वा श्रोणिदेशं प्राप्य " नाकेसुपर्ण"मित्येतामुक्त्वा ऋगन्तप्रणवोच्चारणसमकाले उपविशेत् अनिरस्य तृणम् । एतेनैतदपि ज्ञापितं भवति । अस्मिन्धर्माभिष्टवनमध्ये यत्र यत्र क्रियान्तरं विहितम् अपश्यत्वेत्यादिकं उदुष्यदेवः सविताहिरण्ययेत्यनूत्तिष्ठेदित्यादिकं यजमानमीक्षेत इत्यादिकं च तत्सर्वं मन्त्रसमकालमेव कर्तव्यं न पुनर्मन्त्रान्त इति । अथ प्रेषितो यजति । " ये ३ तस्रोवांधर्मोरक्षतीत्ये " का कल्पजा । " उभापिबतमश्विने " त्येका । एताभ्यामृग्भ्यामनादिश्यानवानं यजति । आगूर्वषट्कारौ तु सकृदेव । " अग्नेर्वीही " त्यनुवषट्कारः " धर्मस्याग्नेर्वीही " ति वा द्विरनुमन्त्रणम् । अथ ब्रह्मा दक्षिणेन गत्वा निरसनोपवेशने कृत्वा वषट्कृते जपति अनुवषट्कृते च " विश्वाआशादक्षिणसादि " ति कल्पजा ऋक् । एवमपराह्णिके प्रवर्ग्ये । अयं तु विशेषः । " यउस्रियास्वाहुतंघृतंपय " इत्येका कल्पजा । " अस्य पिबतमश्विनेत्ये " ताभ्यामृग्भ्यां पूर्ववदनादिश्य यजति । उक्तोनुवषट्कारः । अनन्तरमप्रेषित एवाभिष्टवनशेषं ब्रूयात् । " स्वाहाकृतः शुचिर्देवेषु धर्मज्ञे " त्येका कल्पजा । "समुद्रादूर्मिमुदियर्तिवेन " इत्येका । " द्रप्सः समुद्र " इत्येका । " सखे सखायामि " त्येका । " ऊर्ध्वऊषुणऊतम " इति द्वे । तंघर्मित्थानमस्विन." इति प्रागाथीं पूर्वाह्णे । काण्वीमपराह्णे । " अ-

र्थं चिदस्ये " ति पूर्वाह्णे । " होत्राभिराग्निमि " त्यपराह्णे । सर्वेषु प्रवर्ग्येषु अन्यतरं वा कुर्यात् । अस्मिन्पक्षे उत्तमे प्रवर्ग्ये काण्वीमेव कुर्यात् । केचिदुत्तमेहनि प्रवर्ग्यद्वयेपि काण्वीमेव ब्रुवते । अनयोर्ऋचोर्विशिष्टकालनिर्देशात् । अन्यत्सर्वसाधारणमिति गम्यते । अथ " पावकशोचे " त्येतामुक्त्वा धर्मभक्षणाकाङ्क्षते । अथाहृतमिडामिव प्रतिगृह्य अध्वर्युर्ब्रह्मा प्रतिप्रस्थाताग्नीद्यजमानानुपहूय ब्रह्मा अध्वर्युर्होता प्रतिप्रस्थाताग्नीध्रयजमानः इत्युपहूय । " हुतं हविर्मधु हविरिन्द्रे " त्यनेन मन्त्रेण भक्षयन्ति । अत्रापि प्राणभक्ष एव यजमानं वर्जयित्वा आचम्य पूर्ववदुपविश्य " धर्मायमंसाद्यमानाये " ति प्रेषितः सन् अभिष्टवनशेषं ब्रूयात् । "श्येनोनयोनिमि " त्येका " आयस्मिन्त्सप्तवासवा " इत्येका कल्पजा " सूयवसाद्भगवती " इति परिदध्यात् । उत्तमे प्रागुत्तमाया " हविर्हविष्मोमहिमस " इत्येतामावपेत । उत्तमेहनि प्रवर्ग्यद्वयेपीति केचित् ॥

अथोपसदिष्टिरुच्यते ॥ तस्यां पिञ्यावज्जपलोपः । सा सतन्त्रा उपांशु प्रयोज्या । स्थानाचमनाप्रपदनानि न भवन्ति । प्रवर्ग्यार्थं प्रपन्न एवोपसदमपि कुर्यात् । यत्र पुनः प्रवर्ग्यो न स्यात्तदा प्रवर्ग्यव्यतिरिक्तमुपसन्मात्रं क्रियते तत्र स्थानाचमनादिकं कुर्यात् । तथा चोक्तम् । स्थानादि यस्या धर्मक्रियायाः प्राग्भावितं न क्रियते समस्तं पूर्वं यदा नास्तीह धर्मकर्मस्थानादि सर्वं करणीयमेवेति । वेदिश्रोण्योत्तरयत्येवमादिना धर्मेण स्थित्वा प्रेषितोभिहिङ्कृत्य " उपसद्यायमीढुष " इति तिस्र ऋचः सामिधेनीरन्वाह । एकैकामृचं त्रिरनवानमुपांशु सप्रणवाम् । ऋचां परस्परसन्धानं न भवति । एवं नव सामिधेन्यः । एवं सामिधेनीरनूच्य तासामुत्तमेन प्रणवेन सन्धाय "अग्निसोमंविष्णुमि " त्या-

वाहयेत् । "अग्नआवहे" ति तु प्रथमदेवतामियं परिभाषा न प्रवर्तते । इत्यावाह्येति वचनात् । एवं चार्थात्सामिधेन्यावाहनयोर्यदन्तराले तत्सर्वं लुप्यते । के चिदावाहनं नेच्छन्ति । आवाहनेऽप्येता एव देवता यष्टव्याः । अत ऊर्ध्वं प्राग्घोतृषदनाभिमन्त्रणात् लुप्यते । आवाहनानन्तरमेव अध्वर्युणा ईक्षितः "सीदहोतरि" ति वोक्तः तूष्णीं होतृषदनमवेक्ष्य तूष्णीं निरसनोपवेशने कृत्वा तूष्णीं जानुशिरसा बर्हिरुपस्पृशति । मन्त्राणां क्रियाविशेषणत्वान्मन्त्रलोपेपि क्रियाया न लोपः । अथ स्रुगादापनमाह । न प्रयाजा नाज्यभागौ । प्रधानस्य । "अग्निर्वृत्राणियउग्रइवे" त्यग्नेः । "त्वंसोमासिगयस्फानोअमीवहे" ति सोमस्य । "इदंविष्णुर्विचक्रमेत्रीणिपदांविचक्रम" इति विष्णोः । स्विष्टकृदादि लुप्यते प्रयाजा आज्यभागौ च । सौम्याप्यायननिन्हवौ च पूर्ववत्कर्तव्यौ । एवमपराह्णेपूपसत् । अयं तु विशेषः । "इमांमेअग्नेसमिधमि" ति तिस्र ऋचः सामिधेन्यः । पूर्ववद्देवता आवाहयेत् । याज्यानुवाक्यानां विपर्यासः । पूर्वाह्णे ये उत्तानाः पाणयः तानपराह्णे न्युब्जान् कुर्युः । ये न्युब्जास्तानुत्तानानिति ॥ एतयोरुपसदोर्मध्ये या पूर्वाह्णिकी सा पूर्वाह्णे कर्तव्या । अपराह्णे आपराह्णिकी कर्तव्या । औपवसथ्येहनि उभे अप्युपसदौ पूर्वाह्णे एव कुर्यात् । औपवसथ्य उभे पूर्वाह्णे इति वचनात् ॥

अथ साग्निचित्ये सोमे विशेषः ॥ प्रथमस्यामुपसदि समाप्तायां "चित्यग्निभ्यः प्रणयमग्नेभ्य" इति प्रेषितः पुरीष्यग्निचितयेन्वाह यदि होता दीक्षितः । अदीक्षिते होतरि यजमानो ब्रूयात् । यत्र संप्रेष्यत्यध्वर्युः तस्य पश्चात्पदमात्रेवस्थाय अभिहिंकृत्य "पुरीष्यासोअग्नय" इत्येतामृचमुपांशु सप्रणवां त्रिरुक्त्वा तिष्ठन्नेव "भूर्भुवस्वरि" ति वाचं विसृज्य "प्रणयते" ति उच्चैर्भूया-

त। ते यदि संप्रेष्य व्रजेयुः तथागीति अनुब्रुवन्ननुव्रजेत्। आगत्य प्रक्रमस्थाने पूर्ववद्वाचं विसृज्य "प्रणयते" ति ब्रूयात्। संचितेग्नौ छन्दोगैः अनुगाने कृते अग्निपुच्छस्य पश्चान्निरसनोपवेशने कृत्वा अभिहिंकृत्य मध्यमेन स्वरेण "अग्निरस्मिजन्मनाजातवेदा" इति एतामृचं त्रिः शंसेत्। एतदपि होतर्यदीक्षिते यजमान एव कुर्यात्॥ अथ साग्निचित्येनग्निचित्येग्निप्रणयनं न पशुबन्धवत्॥ अथ ब्रह्मा "आशुः शिशान" इति सूक्तं जपित्वा दक्षिणतोग्नेः साग्निचित्ये तु दक्षिणतोग्नेर्बहिर्वेदि उपविशति। वसोर्धारां चोपगच्छति वसोर्धारा नाम होमः। औपवसथ्येहनि प्रथमाया अग्निप्रणयनीयायाः ऊर्ध्वं स्वरादिनियमो नास्ति। यथेच्छायां मन्द्रादीनामन्यतमो ग्राह्यः। उच्चैरेव अध्वर्युवत्वात्॥ अथ साग्निचित्ये विशेषः॥ अग्निप्रणयनीयानन्तरं वैश्वानरीयेष्टिर्भवति मध्यमस्वरेण। "वैश्वानरोअजीजनदग्निः पृष्टोदिवी" ति याज्यानुवाक्ये। प्रधानस्य। केषांचिदध्वर्यूणां मते कृत्स्नेष्टिर्भवति। तस्याः प्रयोग उच्यते। तस्यां प्रयाजानुयाजा भवन्ति। न स्विष्टकृत्। आमन्त्रितः स्थानाचमनं कृत्वा तीर्थेन प्रविश्य अग्निपुच्छस्य पश्चादवस्थाय। "नमः प्रवक्त्र" इत्यादि। आवाहने "अग्निमग्नआवह सोममावह अग्निंवैश्वानरमावह आवहजातवेदः सुयजायजे" त्यावाह्य देवांआज्यपां इत्यादेर्लोपः। वार्त्रघ्नावाज्यभागौ। प्रधानस्योक्ते याज्यानुवाक्ये। स्विष्टकृदादि लुप्यते आसूक्तवाकात्। सूक्तवाकभूतोद्देशपः कर्तव्यः संस्थाजपवर्जम्। सूक्तवाके "अग्निरिदं॰ अग्निर्वैश्वानरइदं॰ अस्यामृधेद्धोत्रायांदेवंगमायामि" त्यादि। देवाआज्यपाइत्यादेर्लोपः। पूर्ववदागूः॥ अथ साग्निचित्येनाग्निचित्ये हविर्धाने प्रवर्तयन्ति पूर्वकारिणः तदा होता शुचिर्भूत्वा दक्षिणस्य हविर्धानस्योत्तरस्य चक्रस्य यद्वर्त्म तत्पादयोर्मध्ये यथा भ-

चाति तथा पश्चात्त्रिपदमात्रे देशे स्थित्वा प्रेषितोऽग्रेऽभिहिंकारात् "त्वं विप" इत्यनेन मन्त्रेण पादस्य पार्ष्णी अस्पन्दयन् प्रपदेन दक्षिणापांसूंस्त्रिरुद्वपेत् सकृन्मन्त्रेण द्विस्तूष्णीम् । अथाभिहिंकृत्य "युजेवांब्रह्मपूर्व्य" मित्येतां तिष्ठन्नेव ब्रूयात् । अस्यास्तृतीये वचने अर्द्धर्चे आरमेत् यावदध्वर्यवो गच्छन्ति । गच्छत्सु तेषु तिष्ठन्नेवावशिष्टमर्धर्चमुक्त्वाऽनुव्रजन्नुत्तरा अन्वाह । "प्रेतांयज्ञस्ये" ति तिस्रः । "यमेइवयतमानेयदैकमि" त्येका । "अधिद्वयोरदधा" इत्येका । अस्या अर्द्धर्चे आरमेत् । अव्यवद्धा चेद्रराटी । अथबद्धायां रराट्यां तामीक्षमाणः "असंयत" इत्यर्धर्चेन "विश्वारूपाणी" त्येतमुपसन्तनोति । अस्या अर्धर्चे आरमेत् । मेथ्यावनिहतौ चेत् मेथ्योरुपनिहतयो". विनाकमरुर्याद" त्यर्धर्चेन "परित्वागिर्वण" इत्येतां परिधानीयामुपसंतनोति । केचिदध्वर्यवः पूर्वमेव मेथीहननं कृत्वा पश्चाद्रराटीबन्धनं कुर्वंति तैः सह प्रयोगे "परित्वागिर्वण" इत्येतामुक्त्वा "विश्वारूपाणी" ति परिदध्यादिति केचिदाचक्षते । वृत्तिकारस्तु यथासूत्रमेवानुवचनं कर्तव्यमित्याहुः । तत्र बद्धायां रराट्यां मेथ्योरुपनिहतयोरिति भूतकालविशिष्टत्वेन तयोः श्रवणात् प्रक्रमस्थाने तिष्ठन्नेव "भूर्भुवः स्वरि" ति वाचं विसृजेत् ॥ अथाग्नीषोमौ प्रणेष्यत्सु पूर्वकारिषु होता तीर्थेन प्रविश्याग्नीध्रीयायतनं सदश्चोत्तरेण गत्वा पूर्वया द्वारा पत्नीशालां प्रविश्य उत्तरेण शालामुखीयमतिव्रज्य तस्य पश्चान्निरसनोपवेशने कृत्वा प्रेषितोऽभिहिंकृत्य "सावीर्हिदेवप्रथमायपित्र" इत्येकां कल्पजां त्रिरन्वाहासीनः । अस्यास्तृतीयवचने अर्धर्चे आरमेत् यावदध्वर्यवो गच्छन्ति । गच्छत्सु तेषु शिष्टमर्धर्चमासीन एवोक्त्वा अनुव्रजन्नुत्तरा अन्वाह "प्रैतुब्रह्मणस्पति" रित्येका । "होतादेवोअमर्त्य" इति तिस्रः । "उपत्वा-

ग्नेदिवेदित्र" इति तिस्रः । "उपप्रियंपनिप्नतमि" त्येका । अस्या अर्धर्चे आरमेत । आग्नीध्रीये निहितेभिहूयमाने "अगन्मविभ्रत" इत्यर्धर्चेना "ग्नेजुपस्वप्रतिहर्यत" इत्येनामुपसन्तन्त्य "पितुर्माँइवक्षप" इति चतुर्मात्रप्रणवेनोपरमेत । उत्तरेणाग्नीध्रीयमतिव्रजत्स्वध्वर्युपु स्वयमप्युत्तरेणाग्नीध्रीयमतिव्रज्य सोममनुव्रजन्हविर्धानं गच्छेत् । अप्रेपित एव "सोमोजिगातिगातुविदि" ति तिस्रः । "तमस्यराज" त्येका । अर्द्धर्चे आरमेत । प्रपाद्यमानं राजानमनुप्रपद्येत "द्राधा-रदक्षमि" त्यर्द्धर्चेन । "अन्तश्चप्रागा" इत्येका । "श्येनोनंयोनि-मि" त्येका । "अस्तभ्नाद्यामसुर" इत्येषा परिधानीया । क्षेमचार-श्चेद्यजमानः तदा "एवावन्दस्व"त्येतया परिदध्यात् । प्रक्रमस्था-ने उपविश्य "भूर्भुवस्वरि" ति वाचं विसृजेत् । अथ ब्रह्मा होतृ-वदवस्थानवर्जमपरेण वेदिमतिव्रज्य दक्षिणतः शालामुखीयस्य नि-रसनोपवेशने कृत्वा ततः स ब्रह्मा होतारमनूत्थाय यथेतमग्रतो व्र-जेत् यदि न प्रणयेत्तथामति दक्षिणतो व्रजेत् । जपति "आशुः शिशान" इति सूक्तम् । प्राप्य हविर्धाने गृहपतये राजानं प्रदाय हविर्धाने अग्रेण अपरेण वातिव्रज्य दक्षिणत आवहनीयस्योपवि-शेत् । एतद्ब्रह्मासनं पशौ प्रातश्चावपाहोमात् । अथ यदि अग्रेण हविर्धाने गच्छेत् तथामति प्रत्येयात् । सोमहविर्धाने प्रपाद्यमाने पुन स्तत्रैवोपविशेत्तूष्णीम् ॥

अथाग्नीषोमीयेण पशुना चरन्ति ॥ दण्डप्रदानान्तं कर्म उत्तरवे-दिसमीपे भवति । तस्य ऐन्द्राग्नवत्कल्पः । विशेषस्तूच्यते । नात्र पश्विष्टिः । इष्टेर्निरूढशेषत्वात् । उत्तरवेदेः पश्चान्निरसनोपवेशने कृत्वा यूपाञ्जनीया अन्वाह । ततस्तीर्थेन प्रविश्य पश्चादुत्तरवेदेर-वस्थायाग्निमन्थनीया अन्वाह । पुनस्तीर्थेन प्रविश्य "नमः प्रव-क्त्र" इत्यादि । आवाहने वैकल्पिकावाज्यभागावावाह्य "अग्नीषो-

मास्वावह वनस्पतिमावह देवाँ आज्यपाँ" इत्यादि । प्रवृत्ताहुती-र्हुत्वा प्रशास्तारं तीर्थेन प्रपाद्य दण्डं प्रदाय तमग्रतः कृत्वोत्तरेण हविर्धाने अतिव्रज्य पूर्वया द्वारा सदः प्रविश्य उत्तरेण यथास्वं धिष्ण्यानतिव्रज्य होतृषदनाभिमन्त्रणादि स्रुगादापनान्तं करोति होता । मैत्रावरुणस्तु स्वस्य धिष्ण्यस्य पश्चादवतिष्ठते । अथ प्रयाजाः । पर्यग्न्यनुवचनमुपप्रैषः अध्रिगु स्तोकानुवचनमु-त्तमप्रयाजाः । आज्यभागौ । वपायागे विशेषः । "अग्नीषोमाविमं सुम" इत्यनुवाक्या "हो० दग्नीषोमौच्छागस्यवपाया० जुषेतां ह० जयुवमेतानी"ति याज्या । चात्वालमार्जनं कर्तव्यम् । निषेधस्यैष्टिकविषयत्वात् । अथ पुरोडाशयागः । "अग्नीषोमायोअद्य-वामि" त्यनुवाक्या । "हो० दग्नीषोमौपुरोडाशस्यजुषेतांह० ज-आन्यन्दिवोमातरिश्वाजभारे"ति याज्या । अथ साग्निचित्ये विशेषः । अथ पुरोडाशस्विष्टकृतः पुरस्तादेव स्रुचा हवींष्यन्वायातयेयुः पूर्वकारिणः । तत्र देवताः । अग्निर्गृहपतिः, सोमो वनस्पतिः, सविता सत्यप्रसवः, बृहस्पतिर्वाचस्पतिः, इन्द्रो ज्येष्ठः, मित्रः सत्यः, वरुणो धर्मपतिः, रुद्रः पशुमान् पशुपतिर्वा, इत्यष्टौ देवताः । आसां याज्यानुवाक्या उपांशु प्रयोक्तव्याः । याज्यासु देवतादेशो न कर्तव्यः । अन्वायात्यत्वात् । "त्वमग्नेबृहद्वयोहव्यवाडग्निरजरः पितानः" इत्यादिसूत्रपठिताः षोडश ऋचः । अथास्मिन्नेव स्थाने सर्वपृष्ठसंज्ञकानि चेदचा यातयेयुः । तेषां देवताः अग्निर्गायत्रस्त्रिवृद्राथन्तरो वासन्तिकः, इन्द्रस्त्रैष्टुभः पञ्चदशो बार्हतो ग्रैष्मः, विश्वेदेवा जागताः सप्तदशा वैरूपा वार्षिकाः, मित्रावरुणावानुष्टुभावेकविंशौ वैराजौ शारदौ, बृहस्पतिः पाङ्क्तः त्रिणवः शाक्वरो हैमन्तिकः, सवितातिच्छन्दास्त्रयस्त्रिंशो रैवतः शैशिरः, अदितिर्विष्णुपत्नी, अनुमतिः, वैश्वानरः, कः एवं दश देवताः । आसां याज्यानु-

वाक्याः "समिद्दिशामाशयानस्वर्विदि" त्याद्याः सूत्रपठिताः षोडशर्चः अग्न्यादीनामष्टानां प्राज्यानुवाक्याः। "वैश्वानरोअजीजनत्पृष्ठोदिवी" ति वैश्वानरस्य। "कोअद्ययुङ्क्तेधुरिगाऋतस्ये" ति द्रे कस्य। अत्राप्यन्वायात्यत्वादुपांशुत्वादिधर्मो वेदितव्यः। अथ सांग्निचित्येऽनग्निचित्ये च पशुपुरोडाशस्विष्टकृत्प्रकृतिवत्॥

अथ हविर्यागः। "अग्नीषोमाय आहुति" मित्यनुवाक्या। "हो० दग्नीषोमौच्छागस्यह० आत्तामद्य० घस्तान्नू० करवाग्नीषोमौजुषेतां० अग्नीषोमाहविषः प्रस्थितस्ये" ति याज्या। वनस्पतियागे "देवेभ्य" इत्यनुवाक्या। "होता० न्तस्य० यत्राग्नेराज्यस्यहविषः प्रि० यत्रसोमस्याज्यहविषः प्रि० यत्राग्नीषोमयोश्छागस्यहवि० नियत्रवनस्पतेः प्रियापाथांसी" त्यादि। एवमेव स्विष्टकृति अयाडिति विशेषः। सूक्तवाकप्रैषे "अग्निमद्ये" त्यादि। "गृह्णन्नग्नय आज्यंगृह्णन्सोमायाज्यंबध्नन्नग्नीषोमाभ्यांच्छागंसूपस्थे" त्यादि। "सोमायाज्येनाग्नीषोमाभ्यांच्छागेनाघस्तान्तमेदस्तः प्रतिपचत" इत्यादि। आपयजेरङ्गारैरनभिपरिहारे प्रयतेरन्। आग्नीध्राच्चेदाहरेयुः उत्तरेण होतारमतिक्रम्य प्रत्यानीयाग्रतो निदध्याति। शामित्राच्चेदाहरेयुः दक्षिणेन वेद्यन्तकर्णं गत्वा अग्रतो निदध्यात्। सवनीये तु पुनः अंगन्याहरणं भवति। अथानुयाजादि वेदहरणान्तं करोति। वेदग्रहणकाले "उदायुषे" ति मुदसो निष्क्रम्य "वेदोसी" ति वेदं गृह्णीयात्। आग्नेयमुख्यीये पत्नीसंयाजाः। नेदमादिषु हृदयमूलोद्वासनमर्वागनुसन्ध्यायाः। अध्वर्युवशादाज्येडान्तोऽग्नीषोमीयः। अथ वा उपवसथ प्रान्तमेव यज्ञन्तन्वत इति ब्राह्मणवचनात् [illegible]। यथा तु यद्यग्नो हविर्धानेन गतस्तदा तेनैव प्रत्येत्य यदि न अपरेण गतस्तदा अपरेणैव प्रत्येत्य सर्वप्रायश्चित्तानि जुहोति। हुत्वा नि-

ष्क्रमति । अथ वसतीवरीषु परिह्रियमाणासु दीक्षिता ऋत्विजो निष्क्रम्यासीरन् । समाप्तोऽग्नीषोमीयः पशुः ॥

अथ यस्यां रात्रौ अग्नीषोमीयः समाप्यते तस्या रात्रेश्चतुर्थे यामे प्राक् पक्षिणां प्रवादात् प्रातरनुवाकार्थमध्वर्युणा संप्रेषितो वाग्यतस्तीर्थेन प्रपद्य आग्नीध्रीये दक्षिणं जान्वाच्य आहुतिं जुहुयात् "आसन्यान्मामन्त्रात्पाही" त्यनेन । अथ आवहनीये जुहोति । "वागग्रेण अग्रएत्वि" ति प्रथमाम् । "वाचन्देवीमनोनेत्रामि" ति द्वितीयाम् । आतः समानं ब्रह्मणश्च अवस्थानवर्जं हुत्वा दक्षिणत आहवनीयस्योपविशेत् । उभयोर्मन्त्रयोर्वाग्रूपा सरस्वती देवता । अथ होता हविर्धानं गत्वा पूर्वद्वारि प्रत्यङ्मुखस्तिष्ठन् "ऊर्वंतरिक्षंवीही" ति ररराटीमभिमृशति । ततो "देवीद्वाराचि" ति दक्षिणेन पाणिना दक्षिणां द्वार्याः स्थूणामभिमृश्योत्तरामपि द्वार्याः स्थूणामनेनैव पाणिनाभिमृशति । मन्त्रस्तु सकृदेव द्विवचनलिङ्गात् । के चिदुभाभ्यामुभे अपि द्वार्ये युगपदभिमृशन्ति तदयुक्तं यत्नाभावात् । यत्रोभाभ्यां पाणिभ्यामभिप्रेतं कर्म तत्र यत्नं करोति नानापाणिभ्यामभिपद्येतेत्यादौ । दक्षिणं प्रतीयादनादेश इति परिभाषाविरोधाच्च । अतः पर्यायेणाभिमर्शनं कर्तव्यम् । ततः प्रविश्य युगधुरावन्तरे प्राङ्मुखः स्थित्वा निरसनोपवेशने कृत्वा उपविश्य प्रातरनुवाकमनुब्रूयान्मन्द्रेण । "आपोरेवतीरि" त्येका प्रातरनुवाकस्य प्रतिपत् । अथोपप्रयन्त इत्यारभ्य आग्नेयोपमाश्विनेषु त्रिषु क्रतुषु गायत्र्यादीनि च्छन्दांसि सूक्तानि सूत्रकारैः । तेषु सर्वेष्वपि छन्दःसु एव एकैकं सूक्तं गृह्णीयात् । नान्यैराग्नेयम् । गायत्रमत्यावपेद्ब्राह्मणस्येति वचनात् । आग्नेयगायत्रपञ्चप्रतीकानि गृह्णीयात् । यथास्थानं ध्रुवाणि मङ्गलानीति वचनात् । "अगन्मसहातारिष्मेडद्या-

वापृथिवी" इति त्रीणि सूक्तानि अधिकानि भवन्ति। इत्यत्रं क्रियमाणे यावानृक्समूहः सम्पद्यते सोपरिमितप्रातरनुवाको भवतीति वेदितव्यम्। अयमेव प्रातरनुवाको ब्राह्मणे नियततयाभिहितः। तस्मादपरिमितमेवानूच्यन्त इति ॥

अथ प्रयोगकर्तृणां सौकर्यार्थं प्रातरनुवाकस्य सूक्तानामाद्यन्तानि गृह्यन्ते। अभिहिङ्कृत्य। "आपोरेवती० गृणतेवयोधो ३ मुपप्रयन्तोअध्वरं० अग्नेपक्षिंस्वन्दमो ३ मव्रानोअग्न० होतारमृणीतउक्थो ३ मग्निमीडेपुरो० सत्वस्वानःस्वस्तयो ३ मग्निन्दूतंवृणीमहे० इमस्तोमञ्जुपस्वनो ३ वमीष्वाहिमिपेध्य० उक्थोरग्निर्बृहद्धानो ३ त्वमग्नेवसूंरिह० बर्हिरासादयावसो ३ मबोध्यग्निः समिधाजनानां० द्विवीयरुक्मुरुव्यं च मश्रो ३ मग्नम महानममाय० यूयंपातस्वस्तिभिः सदानो ३ मेनावोअग्निनमसा० अग्निर्जनायदाशुषो ३ मग्नेवाजस्यगोमतः० रक्षसोदहमतो ३ अनस्यगोपा अजनिष्टजागृविः० सहसस्पुत्रमाङ्गिरो ३ मग्निन्तं मन्येयोवसु० इमंस्तोतृभ्यआभरो ३ म्प्रतिष्यासूनरीजनी० उपः शुक्रेणशोचिषो ३ मुषोभद्रेभिरागहि० गीर्भिः कण्वाअहूषतो ३ मिदंश्रेष्ठंज्योतिषां ज्योतिरागात्० अदितिः सिन्धुः पृथिवीउततद्यो ३ म्प्रत्युंअदर्श्यायती० उपाउच्छंदस्त्रिधो ३ मुपस्तचित्रमाभरा० अथानोविश्वासौभगान्यावहो ३ मेताउत्याउषसः केतुमक्रत०. गावोनव्रजंव्युषाआवर्तमो ३ म्महानोअद्यबोधय० सुजातेअश्वसूनृतो ३ मेषोउषांअपूर्व्या० अविद्रियाभिरीमो ३ यदद्यस्थः परावति० अवोचामवहन्नमो ३ माभात्यग्निरुषसामनीकं० आविश्वान्यमृता सौभगानो ३ मतारिष्म तमसस्पारमस्य० यूयंपातस्वस्तिभिः सदानो ३ मिमाउवांदिविष्टय० उस्रांक्षियन्ति सुक्षितो ३ मश्विनावर्तिरस्मदा० उपर्बुधोवहन्तुमांमपीतयो ३ म-

बोध्यग्निर्ज्मउदेतिसूर्यो व्योर्वाहविष्मान्मनसाददर्शो ३ मीडेद्यावा पृथिवीपूर्वचित्तये० अदितिः सिन्धुः पृथिवीउतद्यो ३ म्प्रतिप्रियतमंरथं० माध्वीममश्रुतंहवो ३ मि"ति । आद्योत्तमे त्रिर्ब्रूयात् । यदा महत्यां रात्र्यां प्रातरनुवाकः प्रारभ्यते तदा "ईडेद्यावापृथिवीय" मावर्तयेत् आतमसोपधानात् । अथ प्रभाते ईडेद्यावीयस्योत्तमामनुब्रुवन् पूर्वासनादुत्सृप्य "प्रतिप्रियतममि"त्युपसन्तनुयात् पुनरुत्सृप्य द्वार्ये स्थूणे अन्तरेणासीनः उत्तमस्वरेणा "भूदुपा" इत्यनया परिदध्यात् । अथान्यः प्रकारः शताधिको द्विशतादर्वागानियतः । शतप्रभृत्यपरिमित इत्युच्यते । तस्य संमवादिषु प्रयोगो भवति तत्र त्वरता चिकीर्षितत्वात् । तस्यैवं क्लृप्तिः । "आपोरेवती" रित्येका "उपप्रयन्त" इति सूक्ते नवपञ्चके "आवानोअग्न" इति षट् "अग्निमीड" इति सूक्तं नवकम् । अथ तृचाः । "त्वमग्नेवसून्, अबोध्यग्निः समिधा, अगन्ममहा, एनावः, अग्नेवाजस्य, जनस्यगोपाः, अग्निंतंमन्ये, प्रतिष्यासुनरी, उपोभद्रेभिः, इदंश्रेष्ठं, प्रत्युअदर्शि, उपस्ताश्चित्रं, एताउत्याः, महेनोअद्य, एषोउषाः, यदद्यस्थः, आभात्यग्निः, अतारिष्म" पञ्च । "इमाउवान्दिविष्टयः, अश्विनावर्तिः अबोध्यग्निर्ज्मः, ईडेद्यावा" पञ्चविंशतिः "प्रतिप्रियतमं" नव । अयमेवार्थः श्लोकेनाभिहितोऽन्यैः । 'अभ्यासान्प्रतिपत्तिस्त्रः प्रतीकत्रयमुत्तरम् । यथा दैवतं प्रतिच्छन्दं स्तथा प्राद्यं क्रमात्ततः । प्रतिप्रियतमं सूक्तं मङ्क्लैश्चाधिकं शतम्' । इति । तथा च शतमूनुच्यमायुष्कामस्येति ब्राह्मणेभिहितम् । तत्र शतस्येयं क्लृप्तिः । "आपोरेवती" रित्येका अभ्यासात्तिस्रः । "उपप्रयन्त" इति सूक्ते नवपञ्चके । "अवानोअग्न" इति षट् । "अग्निमीड" इति सूक्तं नवकम् । अथैकपातिन्यः । "त्वमग्नेवसून्, आबोध्यग्निः" "अगन्ममहे" ति तिस्रः ।

" एनावोअग्नि " मिति द्वे। " अग्नेवाजस्य, जनस्यगोपाः, अग्निन्तंमन्ये, प्रतिष्यासूनरी " ति द्वे। " उपोभद्रेभिः इदंश्रेष्ठं, प्रत्युअदर्शि " द्वे। " उषस्तश्चित्रं, एताउत्या, महेनाअद्य, एषोउषा " इति द्वे। " यद्युस्थः, आभात्यग्निः, अभूदिदं " ति पञ्च। " इमाउवामि " ति द्वे। " अश्विनावर्तिः, अबोध्यग्निर्ज्मः, ईडेद्यावा " पञ्चविंशतिः। " प्रतिप्रियतमाम " ति नव। उत्तमाया अभ्यासेनैकादश। एवं शतं भवति। तस्य श्लोकः। 'त्रिवृः प्रतिपद्भ्यामात्मनीका अयमुत्तरम। तच्छन्दस एकैका द्वे द्वे गायत्र्यादितः। प्रतिपद्यतमं सूक्तं अङ्गयानि च तच्छतम। आयुष्कामः शतं ब्रूयादशक्तोवाशक्त एव वा। इति। ईडेद्यावीयस्य उत्तमया ऋचा आसन्नादुत्कृष्य मध्यमस्वरेण प्रतिप्रियतमसूक्तं नवकमुपमन्त्रनुयात्। अस्य वाह्यामासन्न ब्रुवन पुनरुत्कृयति तावद्यावद्धार्ये स्वरेणे अन्तरावस्थितः। अथ उत्तमेन स्वरेण परिदधाति। कथमनभ्याहतमाश्रावयन्निव यथाध्वर्युराश्रावयन्निव यथाध्वर्युराश्रावयन्तं क्रमेण सर्वेषां यामानां प्रयोगं करोत्येवमनेनापि परिदधता सर्वे यमाः प्रयोक्तव्याः। विधिरत्नमालायां त्रीणि च शतानि पञ्चित्रानूच्यानि एवमादीनामस्मिन्नेव समाम्नाये पूर्वोक्तन्यायेन यावत्प्रयोजनं सूक्तानि ज्ञेयानि। विस्तरभयान्नोच्यतेऽस्माभिः॥

इति श्रीमन्नारायणभट्टविरचितायामाश्वलायनसूत्रप्रयोगदीपिकायां चतुर्थोऽध्यायः॥

अथैषां प्रातरनुवाकानां मध्ये अन्यतमं प्रातरनुवाकमनूच्य तत्रस्थ एव " अपयिष्यहोतरि " त्यध्वर्युणा उक्तः अनभिहिंकृत्यापोनप्त्रीया अन्वाह। " प्रदेवत्राब्रह्मणेगातुरेत्वि " ति नव ऋचः। " हिनोतानेअध्वरंदेवयज्ये " ति दशमीम। तत्र प्रथमाम

ध्यर्धकारं ब्रूयात् सामिधेनीन्यायेन। द्वितीयाद्या ऋगावानं ब्रूयात् । एवं च अर्थाद्द्वितीये आदाने पञ्चार्धर्चा अनुच्छसता वक्तव्याः । यदि यजमानो वृष्टिकामः स्यात्तदा द्वितीयाद्याः प्रकृत्यैव ब्रूयात् । प्रकृतिपक्षे पूर्वेष्वासामर्धर्चेषु लिङ्गानि काङ्क्षेत् । अथ ग्रहणदेशाद्देवयजनदेशं प्रति आवृत्तास्वेकधनासु "प्रतिपदाय" इति ब्रूयात् । तीर्थसमीपमागतासु "आधेनव" इति ब्रूयात् । तीर्थदेशं प्राप्तासु "समन्यायन्ती" ति ब्रूयात् । तर्थिदेशे होतृचमसेऽपां पूर्यमाणे वसतीवरीष्वेकधनासु समानीयमानासु "आपो नदेवीरुपयन्तिहोत्रियमि" ति उक्त्वा चतुर्मात्रप्रणवेनोपरमेत् । प्रकृतिपक्षेप्यत्रावमानं भवति । आगतमध्वर्यु "मवेरयोध्वर्या उ" इति पृच्छति । "उतेमनंनमुरि" त्यध्वर्युणा प्रत्युक्तो निगदं ब्रुवन् गच्छन्तीनामेकधनानामभिमुखो भूत्वा गच्छेत् । तासु "अध्वर्यो"; इत्यादि "विश्वदेव्यावत" इत्यन्तमनवानमुक्त्वा ता अपरेणातीत्योत्तरतास्तिष्ठेत् । तास्वात्मनोपरेण नीतासु "यस्येन्द्र" इत्यादि निगदशेषमनुब्रुवन्नागच्छेत् । "तारिषोमंबयोपत्यध्वभिरि" ति तिस्रः । ऋगावानपक्षेप्यत्र सन्ततिः कार्या पाठसामर्थ्यात् । तिसृणामुत्तमामनुब्रुवन्नपरया द्वारा हविर्धानमुपपद्येत । "एताअग्मन्नि" ति साद्यमानासु ब्रूयात् । सन्नासु "आग्मन्नाप" इत्येतया परिधाय ततो निष्क्रम्य पूर्वया द्वारा हविर्धानं प्रविश्य उत्तरां द्वार्यस्थूणामासाद्य राजानमभिमुख उपविशेदनिरस्य तृणम् । "प्रदेवत्रे" त्यारभ्यानिगदादुत्तमस्वराच्छनैस्तरं प्रयोक्तव्यम् । निगदप्रभृति "आपोनदेवीरुपैत्ये"तत्पर्यन्तं मध्यमस्वरेण । शेषं मन्द्रस्वरेण । अत ऊर्ध्वं प्रातःसवनमासमाप्तेर्मन्द्रस्वरेण । अथोपांशुसंज्ञकं ग्रहं हूयमानं तत्रस्थ एवाभिमुखो भूत्वानुमन्त्रयेत् । "प्राणंयच्छस्वाहात्वासुहवसूर्यायप्राणप्राणंमेय-

च्छे" ति अनुमन्त्र्य अनुप्राणनं कुर्यात्। शरीरस्थं वायुं नासिकाद्वारेण बहिर्निर्गमयेत् । ततः अन्तर्यामसंज्ञकं ग्रहम् "अपानयच्छ स्वाहात्वासुहवसूर्यायापानापानंमेयच्छे" त्यनुमन्त्र्य अभ्यपानं कुर्यात्। बहिःस्थं वायुं नासिकाद्वारेण अन्तः प्रवेशयेत्। ततो "व्यानायत्वे" त्युपांशुसवनं ग्रावाणमभिमृश्य अथापोनप्त्रीयस्थाने निरसनोपवेशने कृत्वा "भूर्भुवःस्वरि" ति वाचं विसृजेत् प्रातरनुवाकाद्येतदन्तं वाग्यमनम्। अथ बहिष्पवमानसर्पणकाले मैत्रावरुणो ब्रह्मा "द्रप्सश्चस्कन्दे" ति द्वाभ्यां द्वे आहुती जुहोति। प्रत्यगुदगाहवनीयादवस्थायेति विधिना। द्वयोः पवमानः सोमो देवता। इति हुत्वा पूर्वकारिभिः सह सर्पणं कुरुतः। स्तोत्रार्थं तेपूपविष्टेषु मैत्रावरुणो निरसनोपवेशने कृत्वा प्राङ्मुख उद्गातारमभिमुख उपविशति दक्षिणतो ब्रह्मा उदङ्मुख उद्गातारमभिमुखः। अथ होता आपोनप्त्रीयारम्भस्थान एवासीनः तान्सर्वानुपविष्टाननुमन्त्रयते "योदेवानामि"त्यनेन "भूयासमि" त्यन्तेन। अथ हुत्वाध्वर्युमुखौ सच्छन्दोगानां पृष्ठतः प्रशास्ता तत्पृष्ठतो दीक्षिताः तत्पृष्ठतो ब्रह्मा अन्वञ्चु च्छन्दोगा इति सूत्रात् समन्वारब्धौ "वीर्यत्रमन्स्तोष्यामः प्रशास्तरि"ति प्रस्तोत्रा स्तोत्रायाऽतिसर्जितौ ब्रह्मा मैत्रावरुणश्चातिसृजतः। "भूर्भुवन्तः सवितृप्रसूता" इति जपित्वा "ॐस्तुध्वमि" ति उच्चैर्ब्रह्मा प्रातःसवने ब्रूयात् । मैत्रावरुणः "स्तुतदेवेनसवित्रे"त्यादि "साम्न ओमि" ति जपित्वा "स्तुध्वमि" त्युच्चैर्ब्रूयात्। अथ सवनीयेन पशुना चरन्ति पूर्वकारिणः प्राजनान्तमग्नीषोमीयवत्। विशेषस्तूच्यते। "यूपाय परिवीयमाणाये" ति प्रेषितः पश्चादुत्तरवेदेर्निरसोपवेशने कृत्वा अभिहिङ्कृत्य "युवासुवासा" इत्येतां त्रिर्ब्रूयात् । अथाग्निमन्थनादि समानम्। आवाहनादिष्वैष्टिकेषु निगमेषु यत्र यत्र यजमानशब्दो यद्विमन्त्र-

न्तः श्रूयते तत्र तत्र तद्विभक्त्यन्त एव सुन्वच्छब्दो यजमानशब्दादग्रे प्रयोक्तव्यः । अन्त्याद्धारियोजनादूर्ध्वमयं विधिर्न भवति । प्रावित्रं साधुतं यजमानदेवता । "ॐ मन्वतीतेस्मिन्यज्ञे यजमाने" त्येनयोरपि न भवति । अथावाहने "आवहदेवान्सुन्वतेयजमानाये" त्यवसाय वैकल्पिकावाज्यभागावावाह्य "अग्निमा३वह वनस्पतिमावह इन्द्रंवसुमन्तमावह इन्द्रंरुद्रवन्तमावह इन्द्रमादित्यवन्तमृभुमन्तंविभुमन्तंवाजवन्तंबृहस्पतिवन्तं विश्वदेव्यावन्तमावह देवां आज्यपां" इत्यादि । इन्द्रवसुमन्त इत्याद्याः सवनदेवताः । आसां तु देवतानां प्रस्थितयाज्यासु ध्यानं कर्तव्यम् । समागमनान्तरं प्रहुताहुतीर्जुहुति वषट्कर्तारः अच्छावाकवर्जम् । ऋतुयाज्याक्रमेण । अस्य होमस्य वषट्कारनिमित्तत्वात् । अग्नीषोमीयेहनि वरणे कृतेपि अस्मिन्नेवाहनि होमः कर्तव्यः । अथ प्रशास्त्रा "नीर्थेनप्रपद्यस्व" त्युक्तो मैत्रावरुणः स्थानाचमने कृत्वा प्रविश्य स्वयमेव तूष्णीं दण्डं गृह्णाति । दण्डप्रदानवर्जमित्युक्तत्वात् । "मेधपतयेमेधमि" त्यध्रिगौ विशेषः । वपायागे विशेषः । "अग्नेनयसुपथारायेअस्मानि" त्यनुवाक्या । "हो० ऽिच्छागस्य वपायामेदसोजुषतांहविर्होतर्यज" इति प्रैषः । "प्रवः शुक्राय" ति याज्या । अथ ये पाशुका ऋत्विजस्ते चात्वाले मार्जयन्ते । के चितेषां वक्ष्यमाणमुपस्थानं ते सर्वे मार्जयन्त इत्याहुः । चात्वाले मार्जनानन्तरं होता मैत्रावरुणो ब्राह्मणाच्छंसी पोता नेष्टाग्नीध्र इत्येते अध्वर्युपथे स्थित्वा आदित्यप्रभृतीन्धिष्ण्यानुपतिष्ठन्ते । आदित्यमेव "अध्वनामध्वपत" इति मन्त्रेण । अथ तत्रस्था एव यूपादित्याहवनीयनिर्मन्थ्यानुपतिष्ठन्ते । निर्मन्थ्यो नाम यत्राग्निर्मथ्यते स देशः । मथित्वा प्रक्षिप्ताग्निरिति के चित् । अन्ये प्रसिद्धः । "अग्नयः सगरा" इति मन्त्रेण । अथ सव्यावृतस्तत्रस्था

एव शामित्रोत्त्वध्यगोहचात्वालोत्करास्तावानुपतिष्ठन्ते। "अग्नयः सगरा" इत्यनेन। ऊवध्यगोहं पशोरान्त्राणां निखाद्देशः। आस्तावो बहिष्पवमानदेशः। समिद्धा इतरे। पुनर्दक्षिणाद्गतस्तत्रस्था एव आग्नीध्रीयमच्छावाकस्य वाद मार्जालीयं स्वरमित्येतानुपतिष्ठन्ते। "अग्नयः सगरा" इत्यनेनैव। अच्छावाकवादः अच्छावोऽग्निमिति स्थानम्। स्वरो ग्रहसादनदेशः। समिद्धा इतरे। अथोत्तरेणाग्नीध्रीयं परिव्रज्य सदः पूर्वद्वारि प्रत्यङ्मुखः स्थित्वा सदोऽभिमृशति "उर्वन्तरिक्षं वीही"ति आग्नीध्रवर्जाः। अथ द्वार्ये स्थूणेऽभिमृशन्ति "देवीर्द्वार" इति मन्त्रेण दक्षिणेन पाणिना पर्यायेण। मन्त्रः सकृत्। अथ तत्रस्था एव अपरानेतैरेवोपतिष्ठन्ते। ततः उपास्थिताश्चानुपस्थिता होत्रीयाश्चाथ पश्यन्त इतस्ततःमन्त्रोक्तानग्नीन् उपतिष्ठन्ते। उपास्थिता आदित्यप्रभृतयः। अनुपस्थिता होत्रीयादयः। ततः सर्वे "ऊरुत्वीलोकमनुनेषिविद्वानि"ति जपन्तो युगपदेव सदः प्रविशन्ति। प्रविश्य प्रथमं नेष्टा उत्तरेण सर्वान् धिष्ण्यान्गत्वा स्वस्य धिष्ण्यस्य पश्चान्निरसनोपवेशने करोति। अन्येषामप्येवमेव मार्गः। पोता तमपरेण गत्वा स्वधिष्ण्यस्य पश्चादुपविशति। ब्राह्मणाच्छंसी तावपरेण गत्वा स्वधिष्ण्यस्य पश्चादुपविशति। होताप्येतानपरेण गत्वा स्वस्य धिष्ण्यस्य पश्चादुपविशति। मैत्रावरुणोऽप्येवमेव। आग्नीत् आग्नीध्रीयशालां प्रविशति "उर्वन्तरिक्षं वीही"ति। "देवीर्द्वार" इति द्वार्ये स्थूणे। "उरुत्व" इति जपन्प्रविश्य आग्नीध्रीयस्य पश्चादुपविशति। अथ सर्वे होत्रादयो "योऽद्य सौम्य" इति जपन्ति। अत्रोपविष्टानामत ऊर्ध्वमासवनसमाप्तेर्यदा यदा सदःप्रसर्पणं सम्प्राप्नोति तदा स्वं स्वं धिष्ण्यमुत्तरेण मार्गः। एवं ब्रह्मा आदित्यप्रभृतीन्धिष्ण्यानुपतिष्ठते। अयं तु विशेषः। पश्चात्सदः प्राङ्-

मुखः सदोऽभिमृश्य अपरे द्वार्येऽभिमृशति । तत्रस्थ एव पत्नीशालीयान्धिष्ण्यानुपतिष्ठते समस्तांश्च । अपरया द्वारा सदः प्रविश्य दक्षिणपुरस्तान्मैत्रावरुणस्य निरसनोपवेशने कृत्वा "योअग्रसौम्य" इति मन्त्रं जपति ।

अथैन्द्रैः पुरोडाशैरनुसवनं चरन्ति । "धानावन्तं करम्भिणमि" त्यनुवाक्या । "होतायक्षदिन्द्रंहरिवांइन्द्रोधानाअत्त्वि" ति प्रैषः प्रातःसवनलिङ्गकः । अयमेव प्रैषो याज्या । इयान्विशेषः । इन्द्रमित्यादेशस्योद्धारः । होतायक्षदित्यस्य स्थाने आगूः । होतर्यजेत्यस्य स्थाने वषट्कारः । यथा "ये ३ यजामहेहरिवांइन्द्रोधानाजुषाणोवेतु ३ वौ३षट्" इति । एवमन्यत्रापि यत्र क्वचन प्रैषेण यजति । तत्रादेशपदोद्धारवर्जमयं विधिर्भवति । अथ स्विष्टकृतः । "अग्नेजुषस्वनोहविरि" त्यनुवाक्या । "होतायक्षदग्निंपुरोडाशानामि"ति प्रैषः । "ये ३ यजामहेहविरग्नेवीहीवौषट् " इति याज्या । अथ द्विदेवत्यसञ्ज्ञकैर्ग्रहैश्चरन्ति । तदादौ वायव इन्द्रवायुभ्यां ग्रहो भवति " वायवइन्द्रवायुभ्यामनुब्रूही " त्युक्ते " वायवायाहिदर्शतेन्द्रंवायूइमेसुता " इत्यनुवाक्ये । अनवानं पृथक् प्रणवे । " होतायक्षद्वायुमग्रेगां होतायक्षदिन्द्रवायूअर्हते " ति प्रैषावनवानम् । " अग्रंपिबामधूनां शतेनानो अभिष्टिभिरि " ति याज्या । अनवाने द्वयोरपि याज्ययोरेक एवागूर्भवति । आदौ वषट्कारस्तु प्रतियाज्यं भवति । अत ऊर्ध्वं प्रातःसवने प्रयुज्यमाना याज्यानुवाक्या अनवानं वक्तव्याः । इत उत्तरयोर्ग्रहयोः प्रैषावप्यनवानं वक्तव्यौ । अथ हुत्वैतद्ग्रहपात्रमाहरत्यध्वर्युस्तद्गृह्णीयात् । " एतुवसुः पुरुवसुरि " ति प्रतिगृह्य । सव्येनैव पाणिना दक्षिणस्योरोर्वसनमपनीय तस्मिन्नूरौ ग्रहपात्रं सादयित्वा आकाशवदङ्गुलिना पा-

णिना पिदध्यात् । अथ मैत्रावरुणस्य । " अयंवामित्रावरुणे " त्यनुवाक्या । " होतायक्षन्मित्रावरुणे " ति प्रैषः । " गृणानाजमदग्निने " ति याज्या । ऐन्द्रवायवं सव्येन पाणिना पिधाय दक्षिणेन पाणिना मैत्रावरुणं गृह्णीयात् । " एतुवसुर्विदद्वसुरि " ति प्रतिगृह्य दक्षिणेनेन्द्रवायवं हृत्वा अभ्यात्मं सादयित्वोभावपि दक्षिणेन पाणिना पिदध्यात् । प्रतिग्रहणकाले भक्षणकाले च सव्येन पाणिना पिधानम् । अन्यदा दक्षिणेन । अथाश्विनग्रहस्य । " प्रातर्युजाविबोधये " त्यनुवाक्या । " होतायक्षदश्विनानासत्ये " ति प्रैषः । " वाहधानाशुभस्पती " इति याज्या । इतरौ ग्रहौ सव्येन पाणिना पिधाय " एतुवसुः सम्पद्वसुरि " ति आश्विनं दक्षिणेन पाणिना प्रतिगृह्य दक्षिणेनेतरावग्रतो नीत्वा उत्तरेण शिरः पर्याहृत्य अभ्यात्मतरं सादयित्वा त्रीण्यपि पात्राणि पूर्ववदसंसृष्टाङ्गुलिकेन पाणिना दक्षिणेनापिधाय आस्ते । अथोन्नीयमानेभ्यः प्रेषितो मैत्रावरुणः अनभिहिङ्कृत्य " आत्वा वहन्तुहरय " इति नवर्चं सूक्तमन्वाह । आद्योत्तमे त्रिर्ब्रूयात् । " होतायक्षदिन्द्रंप्रातः प्रातःसावस्ये " ति प्रैषः । होता " इद्न्तेसोम्यंमधिव " ति यजति । ततः प्रशास्त्रादयोऽध्वर्युणा नामाभिरादिष्टाः सन्तो यजन्ति । मैत्रावरुणो दण्डं निधायासीनो यजति " मित्रंवयंहवामह " इति । " इन्द्रत्वावृषभंवयमि " ति ब्राह्मणाच्छंसी । " मरुतोयस्यहिक्षय " इति पोता । " अग्नेपत्नीरिहावहे " ति नेष्टा । " उक्षान्नायवशान्नाये " त्याग्नीध्रः । " सोमस्याग्नेवीही " त्यनुवषट्कारः । तथा चोक्तम् । " सोमस्याग्नेवीही " त्यनुवषट्कारः प्रस्थितायाज्यासु शस्त्रयाज्यासु "मरुत्वतीयेहारियोजनेमाहिम्न्याश्विनेचतस्रोअन्त्ये " इति । अनुवषट्कारस्यागूर्नास्ति । सानुवषट्कारेषु द्विरनुमन्त्रणं यत्र क्वचि-

कसम्प्रैषे द्वौ वषट्कारौ समस्तावेव तत्र द्विरनुमन्त्रयेत न चा-गूरुत्तरस्मिन्निति । अथ होता आगतमध्वर्युम् " अयाडग्नीदि " ति पृच्छति । " अयाडि " त्यध्वर्युणा प्रत्युक्तः " सुभद्रमक-र्मेन " इति जपति । अथाश्विनमैत्रावरुणग्रहौ सव्येन पाणिना पिधाय ऐन्द्रवायवमुत्तरेर्धे गृहीत्वा अध्वर्युरेव प्रयच्छेत् ग्रहमनु-त्सृजन्नेव " एषवसुः पुरूवसु " रिति मन्त्रेण । " हूयतान्त-नूपावानस्तन्वस्तपोजा " इति मन्त्रान्तः । ततोध्वर्युः " उपह्व-यस्व " त्युक्त्वा पात्रस्थं सोमं द्वाभ्यामपि नासिकाभ्यामव-घ्राय " वाग्देवीसोमस्यतृप्यत्वि " ति मन्त्रेण भक्षयेत् । यदि तु तत्र प्रतिप्रस्थाता भक्षयति तमप्युपहूय भक्षयेत् । सर्वत्र सो-मभक्षणे वाग्देवीत्ययमेव मन्त्रो वेदितव्यः । ततोध्वर्युणा " होत-र्युपह्वयस्वे " त्युक्त " उपहूत " इति ब्रूयात् । सर्वत्रायमेव प्र-त्युपह्वयाचनमन्त्रः । ततोध्वर्युणा प्रतिभक्षितं किञ्चित्सावशेषं होतृचमसेऽवनीय अनाचम्यैवाध्वर्युप्रतिप्रस्थात्रोरुपहवमिष्ट्वा ना-सिकाभ्यामवघ्राय पुनर्भक्षयेत् । ताभ्यां च प्रतिभक्षितशेषं होतृ-चमस आनीय उत्सृजेत्पात्रम् । अथाश्विनं सव्येन पिधाय मैत्रा-वरुणमुत्तरेर्धे गृहीत्वाऽध्वर्यवे प्रयच्छेत् अनुत्सृजन्नेव " एषवसु-र्विदद्वसुरि " ति मन्त्रेण " हूयन्तान्तनूपावानस्तन्वस्तपोजा " इति मन्त्रान्तः । ततोध्वर्युप्रतिप्रस्थात्रोरुपहवमिष्ट्वा प्रथमं दक्षिणे-नावेक्ष्य पश्चात्सव्येनावेक्ष्य भक्षयेत् । ताभ्यां च प्रतिभक्षित-शेषं होतृचमस आनीयोत्सृजेत्पात्रम् । अथाश्विनं दक्षिणेन पा-णिना पिधाय " एतुवसुनाम्पतीर्विश्वेपान्देवानांसमिदि " ति मन्त्रेण होतृचमसमादाय सव्येन पाणिना तस्यारत्निना स-व्योरोर्वसनमपनीय तस्मिन्नूरौ सादयित्वा विरलाङ्गुलिकेन सव्येन पाणिना पिदध्यात् । अथाश्विनमुत्तरेर्धे गृही-

त्वा दक्षिणेन शिरः समाहृत्य उत्तरेणानीय पूर्वसादितस्थाने पुनः सादयित्वाऽध्वर्यवे प्रयच्छेत् अनुत्सृजन्नेव "एपवसुः संपदृसुरि" ति मन्त्रेण । ततोऽध्वर्युप्रतिप्रस्थात्रोरुपहवमिष्ट्वा ग्रहपात्रं दक्षिणकर्णसमीपे नीत्वा पश्चात्सव्यकर्णसमीपे नीत्वा भक्षयेत् । ताभ्यां च प्रतिभक्षिते शेषं होतृचमस आनीयोत्सृजेत्पात्रम् । अथ दक्षिणेन पाणिना होतृचमसमादाय भूमौ निधाय इडामुपह्वयते । "उपहूतोऽयं सुन्वन्यजमानोऽस्ययज्ञस्यागुरउदृचमशीये" ति तस्मिन्नुपहूय इति विशेष इडायाम् । उपह्वयमानाम्रुपोपगच्छन्ति चमसाश्चमसाध्वर्यवश्चमसिनो वा उपहूयावान्तरेडां प्राश्य इडाभक्षमकृत्वैव आचम्य चमसभक्षणं कुर्यात् । "अध्वर्य उपह्वयस्वे" त्युक्त्वा होता स्वं चमसं द्विर्भक्षयेत् । उक्तेनैव मन्त्रेण । सोनुवषट्कारेषु द्विर्भक्षणं मन्त्रेण प्रथमं तूष्णीं द्वितीयम् । प्रतिवषट्कारं भक्षणं तूष्णीमुत्तरमिति वचनात् । यदा तु शुक्रामन्थिनोः संस्रावं होतृचमसे अवनीतं वोधायनमते तदाऽध्वर्युप्रतिप्रस्थात्रुपहवमिष्ट्वा भक्षयेत् । अस्मिन्पक्षे ते प्रतिभक्षं कुर्वन्ति । केचिदुद्गातृचमसभक्षणं न कुर्वन्ति । उद्गातृचमसं नान्यो भक्षयेत इति शाखान्तरे निषेधदर्शनात् । ततः प्रशास्तृब्राह्मणाच्छंसिपोतृनेष्टाग्नीध्राणां चमसान्सकृद्भक्षयति । तं तं चमसिनमध्वर्युं चोपहूय यथास्वं भक्षयन्त्विति वचनात् । एवं होतृवषट्कारनिमित्ते भक्षे समाप्ते प्रशास्त्रादय आग्नीध्रान्ताः स्वस्ववषट्कारनिमित्तं स्वं स्वं चमसं द्विर्द्विर्भक्षयन्ति । तत्र होतारमध्वर्युं चोपहूय । उभयोरपि सभक्षत्वात् । तांश्चमसानध्वर्युः प्रतिभक्षयति । एवं सर्वेषां वषट्कारनिमित्ते भक्षे समाप्ते सर्वे चमसिनः स्वं स्वं चमसं समाख्यार्थं सकृत्सकृद्भक्षयन्ति । तत्र होतारमध्वर्युं चोपहूय ब्रह्मादयस्तु होतारमध्वर्युं चमसिनो

वा उपहूय । सर्वैः उपहूत इति प्रत्युपहवैः कार्यः । सर्वेत्र "वाग्देवी" ति भक्षणमन्त्रः । अथ सर्वे भक्षयित्वा "अपाम सोमं शन्नोभवे" त्याभ्यामृग्भ्यां यथाक्रमं मुखहृदये अभिमृशेरन् । प्रतिभक्षमिति के चित् । एतदाप्यायनं सर्वत्र सोमभक्षणे कर्तव्यमेकपात्रवर्जम् तथा चोक्तम् । सर्वत्रात्मानमन्यत्रैकपात्रेभ्य इति । "आप्यायस्वसमेतुते सन्तेपयांसिसमुयन्तुवाजा" इति द्वाभ्यामृग्भ्यां चमसानाप्याययन्ति । एतच्चाप्यायनं प्रातःसवने माध्यन्दिने वाद्योपाद्यानां चमसानां वा तृतीयसवने द आद्यानामेव नान्यत्र चमसानाद्योपाद्यान्पूर्वयोः सवनयोराद्यास्तृतीयसवने इति वचनात् । अथाप्यायितश्चसमान्दक्षिणस्य हविर्धानस्याधस्तान्सादयन्त्यध्वर्यवस्ते नाराशंससञ्ज्ञका भवन्ति । एतस्मिन्कालेऽच्छावाकः स्थानाचमने कृत्वा तीर्थेन प्रविश्य उत्तरेणाग्नीध्रीयं परिव्रज्य पूर्वेण सद आत्मनो धिष्णियदेशे निरसनोपवेशने कृत्वा अध्वर्युणा दत्तं पुरोडाशखण्डमिडामिवोद्यम्य "अच्छावाक वदस्वे"त्युक्तोनभिहिङ्कृत्य "अच्छावोअग्निमवस" इति तृचमन्वाह । आद्योत्तमे त्रिर्ब्रूयात् । अस्य तृचस्योत्तमाया ऋचस्तृतीयवचने यः प्रणवस्तेन यजमानहोतरध्वर्योग्नीदिति निगदमुपसंतनुयात् अनवानं ह्वयध्वामित्येवमन्तम् । समाप्तेऽस्मिन्निगदेऽध्वर्युर्होतर्युपहवं काङ्क्षते अच्छावाकस्य । अथ होता "प्रत्येतासुन्वन्यजमान" इत्यनेन निगदेनाच्छावाकमुपहूयते । अच्छावाक "उन्नीयमानाये" ति प्रेषितोऽनभिहिङ्कृत्य "प्रत्यस्मैपिपीषत" इति सूक्तं चतुर्थमन्वाह । आद्योत्तमे त्रिर्ब्रूयात् "अच्छावाक यजे"त्युक्तः । "प्रातर्यावभिरागतमि" ति याज्या । उक्तो वषट्कारः । एतत्पर्यन्तं पुरोडाशशकलस्येडायामिवोद्यमनं भवति । अथ पुरोडाशशकलं निधाय स्पृष्टोदकं चमसं भक्षयेत् । नास्पृ-

ष्टोदकाः सोमं लभेरन् । "अध्वर्यउपह्वयस्व" इत्युक्त्वा उक्तेनैव मन्त्रेण तूष्णीं द्वितीयं भक्षयति । अध्वर्युणा प्रतिभक्षिते पुनरध्वर्युमुपहूय समाख्यानिमित्तं भक्षयति । भक्षयित्वा "अपाम सोमं शंनोभव" इत्याभ्यामृग्भ्यामाप्यायनं मुखहृदये जलैरभिमृशेरन् । "आप्यायस्वसमेतुते सन्तेपयांसि" इति चमसमाप्यायनम् । आप्यायितं चमसं सादयति सोऽपि नाराशंसनकसंज्ञको भवति । अथ पुरोडाशशकलं गृहीत्वोत्थाय तत्रस्थ एव पूर्वोक्तक्रमेणादित्यप्रभृतीन्धिष्ण्यानुपस्थायाऽपरया द्वारा सदः प्रविशति पूर्ववत्पदाद्भिश्चाभिमृश्योपस्थितांश्चानुपस्थितांश्चोपस्थाय "उरुणो लोकमि" त्येतां जपन्प्रविश्य पश्चात्स्वस्य धिष्ण्यस्य निरसनोपवेशने कृत्वा "योअद्यसौम्य" इति जपति । होत्रादय अच्छावाकप्रवेशात्प्रागेव विसंस्थितमञ्चरेण निष्क्रम्याग्नीध्रीये प्राप्नुवन्ति । अच्छावाकोपि सदसि पुरोडाशशकलं प्राश्याचम्य उपविष्टोऽच्छावाके त्वस्मिपि विसंस्थितमञ्चरेण निष्क्रम्याग्नीध्रीयं गच्छेत् । तत्र सर्वे हविरुच्छिष्टमाग्नीध्रीयेऽध्वर्युणानीतं प्राश्नीयुः । अच्छावाकोपि पूर्वया द्वारा निष्क्रम्याग्नीध्रीयं प्राप्याग्नीध्रीयसमीपे एव पुरोडाशशकलं प्राश्य हविरुच्छिष्टं प्राश्नीयादित्येके । एतस्मिन्काले क्षुधार्त्तानां शरीरस्थित्यर्थं भोजनमपि भवति । अथ सर्वे सदः प्रविशन्ति विसंस्थितमञ्चरेण । सर्वेषूपविष्टेषु ऋतुयाजा भवन्ति । तेषां प्रैषाः । "होतायक्षदिन्द्रंहोत्रादि" त्यादि पञ्चमे प्रैषसूक्तम् । एता एव याज्याः । याज्यास्वयं विशेषः । होतायक्षदिति स्थाने आगूर्भवति । अनोयजेत्यस्य स्थाने वषट्कारः । मैत्रावरुणो येन येन प्रैषेण यं यं प्रेष्यति स स तेन तेन प्रैषेण यजति । मैत्रावरुणस्त्वात्मीयं प्रैषमुक्त्वा दण्डं निधायोपविश्य यजति । अध्वर्युगृहपतिभ्यां "होतरेतद्यजे" त्युक्तो होता तथैव यजति । ना-

नुवषट्कारः । अथात्र वषट्कर्तृक्रमः । होता पोता नेष्टा आग्नीध्रः प्रशास्ता होता पोता नेष्टा अच्छावाकः अध्वर्युः गृहपतिः । अथाहृतं ऋतुपात्रं । वषट्कारक्रमेणैव वषट्कर्तारो भक्षयन्ति । येषां याज्यासु प्रतिप्रस्थात्रा होमः कृतः ते तमेवोपहूय भक्षयन्ति । स एव तेषां प्रतिभक्षयिता । तस्मिंश्चैवोपहव इति वचनात् । अथ बहिष्पवमानानुशंसनमाज्यशस्त्रं शंसेत् ऋतुपात्रभक्षणानन्तरम् । अध्वर्युः होतृपुरत आसीनः पराङावर्तते । तस्मिन्परावृत्ते होता " सुमत्यद्‌ग्देपितामातरिश्वे " त्यादिकं होतृजपसञ्ज्ञकं मन्त्रं जपित्वा अनभिहिङ्कृत्य " शोंसावोमि " त्युच्चैराह्वयति । प्रातःसवने शस्त्रादिषु " शोंसावोमि " ति त्र्यक्षर आह्वः । पर्यायप्रभृतीनां चादौ त्र्यक्षर एव । सवनत्रयेपि शस्त्रमध्ये त्र्यक्षर एव । आहूयानुच्छ्वसन् " भूरग्निर्ज्योतिरग्र " इत्यन्तं तूष्णींशंससञ्ज्ञकं मन्त्रं शंसेत् उपांशु सप्रणवमसन्तन्वन् । स च त्रिपदो भवति । षट्पदं तूष्णींशंसं शंसेदिति वचनात् । षट्पदो वा शंस्तव्यः । षट्पदपक्षे पूर्वज्योतिःशब्दैरग्रे-न्यस्येत् । तूष्णींशंसं शस्त्वाऽनुच्छ्वसन्नग्निर्देवेद्ध इत्येतां द्वादशपदां निविदं सन्दध्यात् । यथापठितमेव पदानि विग्राहं शस्त्वा उत्तमेन पदेन प्रणुत्य " प्रवोदेवाये " ति सप्तर्चं सूक्तमुपसन्तनुयात् । अस्याद्यामृचं त्रिः शंसेत् । अर्द्धर्चशो विग्राहम् । ऋगावानं वा विग्राहमेव वा । ऋगावानपक्षे तृतीये वचने सन्ततिः कार्या द्वितीयात्रा अर्द्धर्चश एव शंसेत् । प्रातःसवने सर्वत्रार्धर्चशः शंसनमेव । आहूयोत्तमया परिदध्यात् । सर्वशस्त्रपरिधानीयास्वयं विधिर्भवति । एषा आज्यशस्त्रस्य क्लृप्तिः ॥

अथ शस्त्रपाठः प्रदर्श्यते ॥ " सुमत्यद्‌ग्देपितामातरिश्व० इदंशंसिष्यती " ति जपित्वा " शोंसावोमि " त्युच्चैरुक्त्वा । " भू-

रग्निर्ज्योतिर्ज्योतिरग्नी ३ मिन्द्रोज्योतिर्भुवोज्योतिरिन्द्रो ३ सू- र्योज्योतिर्ज्योतिः स्वः सूर्यो ३. मग्निर्देवेद्धः अग्निमन्विद्धः अ- ग्निः सुषमित् होतादेववृतः होतामनुवृतः प्रणीर्यज्ञानां रथीर- ध्वराणामतूर्तो होता तूर्णिर्हव्यवाट् आदेवोदेवान्वक्षत् यक्षद- ग्निर्देवोदेवान् सोअध्वराकरतिजातवेदो ३ प्रवोदेवायाग्नये बर्हि- ष्ठमर्चास्मैगमदेवेभिराशनो यजिष्ठो बर्हिरासदो ३ " त्रिः । " दो- मृतावाया० सहस्रसातमो ३ शोंसावोनूनोरास्वसहस्रवत् " त्रिः । " प्रवोदेवाये " ति सूक्तं ब्राह्मणक्रमेण वा शंसेत् । " अवोद- य दीदिवांससनः शर्माणि उतनोब्रह्मन् मयन्तावियः ऋतावा- यस्य नूनोरास्व " ति परिधानीय । अन्यत्समानम् । उक्थवा- चि " घोपायंत्वे " ति शस्त्वा जपेत् अथोक्थशांयजे " ति प्रेषितः । " अग्नइन्द्रश्चदाशुषोदुरोण " इति याज्या । उक्तो- नुवषट्कारः । शस्त्रोपक्रमादारभ्य आवषट्काराद्गमनं कर्तव्य- म् । सर्वशस्त्रेष्वयं विधिः । अथाहुतमुक्थपात्रमध्वर्युमुपहूय द्वि- र्भक्षयेत् । सर्वत्र सानुवषट्कारे द्विर्भक्षणं मन्त्रेण प्रथमं तूष्णीं द्वितीयम् । ततः सर्वे चमसिनः " अध्वर्यउपह्वयस्व " त्युक्त्वा " चमसिन उपहूयध्वमि " ति वा उक्त्वा उक्तमाप्यायनं चम- साप्यायनं च ॥

अथ शस्त्रप्रतिगरा उच्यन्ते ॥ शस्त्रादौ शस्त्रमध्ये चाह्वाने " शों- सामोदैवे" ति प्रतिगरः । विग्राहे प्रतिगरो नास्ति । अवसाने " ओथामोदैवे " ति प्रतिगरः । स एव प्रणवे प्लुतादिर्भवति । स एव प्रणवान्तेवसाने प्रणवान्तो भवति । आह्वानपूर्वेर्विति [illegible] त्रिमात्रः प्रणवः प्रतिगरः स आह्वानप्रतिगरेण सन्ततो वक्तव्यः । " ओं ३ शोंसामोदैवे " ति । शस्त्रान्ते तु प्रणवस्त्रिमात्रः प्रति- गरः । शस्त्रस्वरः प्रतिगरो भवति । अथ " ब्रह्मन्स्तोष्यामः प्र-

शास्तरि " ति प्रस्तोत्रा स्तोत्रायातिसर्जितः ब्रह्मा " भूरिन्द्रव-तः सवित्रृप्रसूतः ओ३म् स्तुध्वमि ". त्युच्चैः । मैत्रावरुणः "स्तुतदे-वेने " त्यादिकं मन्त्रमुक्त्वा " स्तुध्व " मित्युच्चैर्ब्रूयात् । स-र्वस्तोत्रेषु मैत्रावरुणस्यायं विधिः । अथ प्रस्तोत्रा स्तोत्रान्ते एषे-त्युक्ते अनन्तरमुद्गातुर्योहिङ्कारं शस्त्रायाह्वयीरन् प्रातः सवने । उ-त्तरयोः सवनयोरेपेत्युक्तेऽनन्तरं यः प्रतिहारस्तदाह्वयीरन् । इ-ति शस्त्रारम्भकालः ॥

अथ प्रउगशस्त्रम् । " वायुरग्रेगायज्ञप्री " रित्येवमाद्याः पुरोरुक्सञ्ज्ञकाः सप्त ऋचः । " वायवायाहिदर्शते " त्येव-माद्याः सप्त तृचः । तत्र यथाक्रमेण एकैकस्याः पुरोरुचः उप-रि तृचं शंसेत् । द्वितीयां प्रउगे त्रिरिति वचनात् "वायवायाहिदर्श-ते" त्येतामेव त्रिः शंसेत् । नाद्याम् । विश्वान्देवानित्येषां षष्ठी । पुरोरुक्भ्यः आह्वानं कुर्यात् । " वाचमष्टामि " त्येषा पुरोरुक् वि-कल्पेन शस्या । यदा त्वस्याः पुरोरुचो न शंसते तदा "पावकान" इत्यस्य तृचस्याह्वावः कर्तव्यः । आहूयोत्तमया परिदधाति । एत-त्प्रउगं माधुच्छन्दसमित्युच्यते । एषा प्रउगशस्त्रक्लृप्तिः ॥

अथ शस्त्रपाठः । "हिंभूर्भुवस्वरों ३ शोंसावों ३ वायुरग्ने-गायज्ञप्रीः साकंमन्मनसायज्ञं शिवोनियुद्भिः शिवामों ३ वायवाया-हिदर्शते" ति त्रिः । "श्रुधीहवों ३ वायउक्थेभिः० सोमपीतयों ३ शोंसावों ३ हिरण्यवर्तनीनरादेवापत्नीअभिष्टये वायुश्चेन्द्रस्यसुम-खों ३ मिन्द्रवायू इमे० मक्षिवत्याधियानरों ३ शोंसावो ३ त्का-व्यारजानाकत्वादक्षस्यदुरोणे रिशादसासधस्थओ ३ म्मित्रंहुवे पूतदक्षं० दधाते अपसों ३ शोंसावों ३ दैव्याअध्वर्यूआगतंरथेन सूर्यत्वचा मध्वायज्ञंसमञ्जायो ३ मश्विनायज्वरीरिषो० आयातंरुद्र-वर्तनों ३ शोंसावो ३ मिन्द्रउक्थेभिर्मन्दिष्ठोवाजानांचवाजपतिः

हरिवांसुतानांसखो ३ मिन्द्रायाहिचित्रभानो० सुतेदीधष्वनेश्चनों ३ शोंसावों ३ विश्वान्देवान्हवामहेऽस्मिन्यज्ञेसुपेशसः तइमंयमागमन्देवासोदेव्याधिया जुषाणाअध्वरेसदोयेयज्ञस्यसनूकृतः विश्वआगोमपीतयों ३ सोमासश्च० जुपन्तवन्हयों शोंसावोंवाचैममहन्देवींवाचमस्मिन्यज्ञेसुपेशमामरस्वतींहवामहों ३ पावकानः सर० यज्ञन्दधसरस्वती ३ शोंसावों ३ महोअर्णः सरस्वतीः " परिधानीयया परिदध्यात्। "उक्थं वाचि श्लोकायत्ये"ति शस्त्वा जपः। " वर्धेभिः सोम्यंमध्वि " ति याज्या। उक्तोनुवषट्कारः। आज्यशस्त्रवद्भक्षविधिः चमसाप्यायनवर्जम्। सर्वभक्षाश्चमसा भवन्ति। अथ " ब्रह्मन्स्तोष्यामः प्रशास्तरि " ति श्रुत्वा ब्रह्मा पूर्ववदतिसृजेन्मैत्रावरुणश्च ॥

अथ मैत्रावरुणशस्त्रम्। एपेत्युक्ते उद्गातुर्हिङ्कारेभिहिङ्कृत्य " शोंसावो ३ मानोमित्रावरुणे " ति स्तोत्रियस्तृचः। " यातंसोमसुतावृधो ३ शोंसावोमानो गन्तंरिशादसे " ति अनुरूपस्तृचः। अन्यत्रापि स्तोत्रियानुरूपावित्युक्ते तृचौ वेदितव्यौ। " अस्य सोमस्यपीतयों ३ शोंसावों ३ प्रवोमित्रायगायते " ति पञ्चर्चं सूक्तम्। " प्रमित्रयोर्वरुणयोरि " ति नवर्चम्। आहूयोत्तमया परिदध्यात्। उक्थं वाचि शस्त्वा जपः। " आयातंमित्रावरुणे "ति याज्या। उक्तोनुवषट्कारः। उक्थपात्रशेषं चमसेवनीतमध्वर्युमुपहूय द्विर्भक्षयति। ततः सर्वाश्चमसान् नं तं चमासिनमुपहूय द्विर्भक्षयति। ततः सर्वे चमसिनः स्वं स्वं चमसं समाख्यानिमित्तं सकृद्भक्षयन्ति। प्रशास्तारमुपहूय चमसिनो वा पूर्ववदाप्यायनं च। न चमससमाप्यायनम्। बृहत्पृष्ठपक्षे " मित्रंवयं हवामहे " इति स्तोत्रियः। अनुरूपादि समानम्। अथ " ब्रह्मन्स्तोष्यामः प्रशास्तरि " ति श्रुत्वा ब्रह्मा पूर्ववदतिसृजेत् मै-

त्रावरुणश्च ॥

अथ ब्राह्मणाच्छंसिशस्त्रम् । एषेत्युक्ते उद्गातुर्हिङ्कारे अभिहिङ्कृत्य " शोंसावो ३ मायाहिसुषुमाहिते " ति स्तोत्रियस्तृचः । " सुतावन्तोहवामहों ३ शोंसावोमानोयाहिसुतावत " इत्यनुरूपस्तृचः " शोंसावोमयमुत्वाविचर्षण " इति सप्तर्चाः । " इन्द्रत्वा वृषभंवयमि " ति नवर्चं सूक्तम् । "उद्वेदभी" ति तिस्रः । तिसृणामाहूयोत्तमया परिदध्यात् " उक्थंवाची " ति शस्त्वा जपः । "इन्द्रक्रतुविदंसुतमि " ति याज्या । उक्तोनुवषट्कारः । मैत्रावरुणवद्भक्षविधिः । तत्र " प्रतिप्रस्थातरुपह्वयस्वे " ति विशेषः । बृहत्पृष्ठे तु "इन्द्रमिद्गाथिनोवृहदि " ति स्तोत्रियः । अनुरूपादि समानम् ॥

अथाच्छावाकशस्त्रम । एषेत्युक्ते उद्गातुर्हिङ्कारे अभिहिङ्कृत्य " शोंसावो ३ मिद्राग्नीआगतमि " ति स्तोत्रियस्तृचः । " शोंसावोमिन्द्राग्नीअपसस्परी " त्यनुरूपस्तृचः । " शोंसावो ३ नोशावृत्रहणाहुव " इति तिस्रः । " इहेन्द्राग्नीउपह्वय" इति षडृचं सूक्तम । "इयंवामस्यमन्मन "इति नव ऋचः । आहूयोत्तमया परिदध्यात् । " उक्थंवाची " ति शस्त्वा जपेत् । " इन्द्राग्नीआगतंसुतमि " ति याज्या । उक्तोनुवषट्कारः । ब्राह्मणाच्छंसिवद्भक्षः । वृहत्पृष्ठे तु " इन्द्रेअग्नानमोवृहदि " ति स्तोत्रियः। अनुरूपादि समानम। अथ "ब्रह्मन् स्तोष्यामः प्रशास्तरि " ति श्रुत्वा ब्रह्मप्रशास्तारौ पूर्ववदनिसृजतः ॥

अथ माध्यन्दिनं सवनम । संस्थिते सवने मृगतीर्थसर्पणं कुर्युः । तस्य विधिः " शास्तः प्रमुही " त्यध्वर्युणोक्तो मैत्रावरुणः " सर्पते " ति ब्रूयात् । ततो होता दक्षिणेनोदुम्बरीमितरे आजीवेन गत्वा सर्वे अपरया द्वारा निष्क्रम्य उत्तरया वेदि-

श्रोण्या बहिर्निष्क्रामन्ति। निष्क्रम्य किञ्चिदुदककार्यमावश्यकं चेत् तत्कृत्वा पुनस्तथैव वेदिश्रोण्या वेदिं प्रविश्य सदः पश्चात्प्राङ्मुखः स्थित्वा आदित्यप्रभृतीन्धिष्ण्यान् "अग्नयः सगरा" इति मन्त्रेण सकृदेवोपस्थाय अपरस्यां दिशि सदोद्वार्ये च पूर्ववदभिमृश्य यथास्वं धिष्ण्यानां पश्चान्निरसनोपवेशने कृत्वा "योअद्यसौम्य" इत्येतं मन्त्रं जपन्ति। एतन्मृगतीर्थमर्पणमित्युच्यते॥ एतस्मिन्काले ग्रावस्तुत् स्थानाचमनं कृत्वा तीर्थेन प्रविश्य अध्वर्युपथे स्थित्वा आदित्यप्रभृतीन्धिष्ण्यानच्छावाकवदुपस्थाय हविर्द्धानस्य पूर्वद्वारं गत्वा हविर्द्धानशालाद्वार्यस्थूणे होतृवदभिमृश्य उपस्थितानलुपस्थितांश्च पूर्ववदुपस्थाय "उरुल्लोलोक" मित्येतां जपन् प्रविशति। तूष्णीं प्रवेशमन्ये मन्यन्ते के चित्। दक्षिणस्य हविर्द्धानस्योत्तरस्याक्षशिरसः प्रागुदग्देशे स्थित्वा मन्त्रेण तृणं निरस्य उपवेशनमन्त्रमुक्त्वा तिष्ठन्नेव "योअद्यसौम्य" इति जपित्वा राजानमभिमुखोऽवतिष्ठते। अथ ग्रावस्तुते अध्वर्युरुष्णीषं प्रयच्छति तदञ्जलिना प्रतिगृह्य त्रिः प्रदक्षिणं शिरः संमुखं वेष्टयित्वाऽऽस्ते। अथ प्रवृत्तेऽभिषवे अर्पित एव ग्राव्णोऽभिष्टुयान्मध्यमस्वरेण। एतत्प्रभृतिइदं सवनं मध्यमस्वरेण भवति। अथाभिष्टवनम्। अनभिहिङ्कृत्य "अभित्वादेवसवितरि"त्येतां त्रिर्ब्रूयात्। "युञ्जन्तेमन" इत्येका। "आतूनइन्द्र" इत्येका। "माचिदन्यदि"त्येका। "प्रैतेवदन्त्व"त्यर्बुदं चतुर्दशर्चं सूक्तम्। अस्य सूक्तस्य प्रागुत्तमाया "आवऋञ्जसेमवोग्रावाण" इति सूक्ते अष्टचतुष्के आवपेत्। अनयोश्च सूक्तयोर्मध्ये पुरस्तादुपरिष्टाद्वा पावमानीः "स्वादिष्ठये"त्याद्या आवपेत यावदभिष्टूयते सोमः। समाप्तेऽभिषवे "सुते अध्वर" इत्येतामर्बुदस्योत्तमामुपसन्तत्य तया परिदध्यात्॥ पिधायोष्णीषं यजमानाय प्रयच्छेत्। ततस्तेनानुज्ञातः पुनरादाय यथारुचि विनियोगं कु-

र्यात् ॥ अथापरमभिरूपामित्यारभ्य समानमन्यादित्येतेन सूत्रेण उ-क्तमभिष्टवनं कुर्यात् । यथासूत्रमर्बुदमेवेत्येके । प्रवोग्रावाण इत्ये-के । अनयोः संसवादिषु प्रयोगो वेदितव्यः । तत्र त्वरायां अपे-क्षितत्वात् । अथापरमभिरूपं कुर्यादिति गाणगारिराचार्यः । "आ-प्यायस्वसमेतुत" इति तिस्रः "प्रैतेवदन्त्वि"ति तृचः । एताः ऋच आप्याय्यमाने "सृजन्तित्वा" दशाक्षिप ऋचः "एतमुत्यं" दशाक्षि-पो "सृजन्ति" सप्तऋचः "मृज्यमानः सुहात्यृक्" "सुपर्णावाचमक्र-तोपद्यवी"ति तृचः।एताः मृज्यमाने सोमे । "आदशभिर्विवस्वतः" "दुहन्तिमप्तैकां" अधुक्षत्पिप्युषीमिषं" "ते अद्रयोदश-यन्त्रास आशवः" इति तृचः । एता दुह्यमाने । "आ-कलशेपुधावति पवित्र" इत्येके । "आकलेशपुधावतिश्येनोवर्मवि-गाहत" इति द्वे "तृदिलाअतृदिलाम" इति तृचः एता आसि-च्यमाने । अध्वर्युसकाशाद्बृहच्छब्दे श्रूयमाणे "बृहद्वदन्ति मदिरे-णमन्दिने"ति चतुर्थीमृचम् । "यदि ग्रावाणः संह्रादेरन् तथा-सति "माचिदन्यद्विशंसते"ति एतामृचमभिष्टुयात् "सुते अध्वर" इत्यनया परिदधाति । समानमन्यत्।अथापरमभिष्टवनम् ॥ अर्बुद-मेवैक इच्छन्ति "प्रवोग्रावाण" इत्येतदेव सूक्तमेक इच्छन्ति ॥ इ-त्यभिष्टवनम् ॥

अथ मैत्रावरुणो ब्रह्मा च माध्यन्दिनपवमानसर्पणार्थं पूर्व-वद्विपुङ्होमौ हुत्वा पूर्ववत्सर्पणं करोति । "ब्रह्मन्स्तोष्यामः प्रशा-स्तरि" ति प्रस्तोत्रा प्रेषिते ब्रह्मा "भुवरिन्द्रवन्तः सवितृप्रसूता" इति जपित्वा "स्तुध्वमि" त्युच्चैर्ब्रूयात् । मैत्रावरुणः "स्तुतदेवेने" त्यादि । स्तुते माध्यन्दिने पवमाने । अंगारविहरानन्तरं दधिधर्मेण चरन्ति । यदि प्रवर्ग्यवान् क्रतुः स्यात् । "होतर्वदस्वे" त्युक्तः "उत्तिष्ठन्नावपश्यते" त्येतामृचमनवानमाह । "श्रातं हवि" रित्यु-

क्तः "आतंहविरोष्विन्द्रे" त्येतामृचमनवानमाह । ऋगीवानमेके । यजेत्युक्तः "आतमन्यऊधनिश्चातमग्रावि" त्यनवानं यजति । "अग्नेवीही" त्यनुवषट्कारः । "दधिघर्मस्याग्नेवीहीं" ति वा । घर्मवद्भक्षविधिः । "मयित्यदिन्द्रियंबृहदि" ति भक्षणमन्त्रः । ये धिष्ण्यवन्तः निष्क्रम्य गच्छन्तः सन्तोऽध्वर्युभिरङ्गारविहरणं कृतं तदा इदं प्रायश्चित्तं धिष्ण्यस्वामी स्वधिष्ण्यस्य पश्चात्स्थितो न भवति चेदित्यर्थः । पुरस्तात्स्वस्य धिष्ण्यस्य निरमनोपवेशनं कृत्वा उपहवनयाचनं यजमानादिष्वा "परित्वाग्नेपुरंवयमि" ति जपेत् ऋचम् । अथ सवनीयपुरोडाशैश्चरन्ति । तेषां पुरस्तादुपरिष्टाद्वा पशुपुरोडाशेन चरन्ति। पुरोडाशस्याऽक्रियामेके इच्छन्ति । यदि क्रियते तदा "अग्नेत्वंपारयानव्यो अस्मानि" त्यनुवाक्या । "होतायक्षदग्निपुरोडाशस्यजुषतामि" ति प्रैषः । "यथाविमस्यमनुष" इति याज्या । स्विष्टकृतः "इडामग्ने होतायक्षदग्निपुरोडाशस्ये" ति प्रैषः । " स्वदस्वहव्ये " ति याज्या । अथ सवनीयपुरोडाशानाम् । माध्यन्दिनस्य सवनस्य " धाना " इत्यनुवाक्या । होतायक्षदिन्द्रंहरिवांइन्द्रोधाना अत्तु " ति प्रैषः । अनेनैव यजति पूर्ववत् । प्रैषयाज्ययोर्माध्यन्दिनस्य सवनस्येति लिङ्गम् । अथ स्विष्टकृतः । माध्यन्दिने सवने "जातवेद" इत्यनुवाक्या । " होतायक्षदग्निंपुरोडाशानामि " ति प्रैषः । " ये ३ यजामहेऽग्निं रग्नेवीही ३ वौषट् " इति याज्या । यदि सवनीयानां स्विष्टकृता सहैव पशुपुरोडाशस्विष्टकृतं कुर्वन्ति तदा सवनीयानामेव स्विष्टकृतः प्रैषयाज्या भवन्ति न पशुपुरोडाशस्य । अथोन्नीयमानेभ्यः प्रेषितो मैत्रावरुणोनभिहिङ्कृत्य "असाविदेनङ्गोऋजीकमन्त" इति दशर्चं सूक्तम् । आद्योत्तमे त्रिः " होतायक्षदिन्द्रंमाध्यन्दिनस्ये " ति प्रैषेण प्रेषितो होता " पिबासोममभियमुग्रतर्द " इ-

त्यनया प्रास्थितयाज्यया यजति । उक्तोनुवषट्कारः । प्रशास्त्रादयः स्वैः स्वैर्नामभिरादिष्टाः सन्तो यजन्ति । " सईंयाहि " इति मैत्रावरुणः । " एंवायाहिमत्तनथांमन्दतुत्वे " ति ब्राह्मणाच्छंसी । " अगिंहेरी " ति पोता । " तवायंसोम " इति नेष्टा । " इन्द्रायसोमाः प्रदिवोविदाना " इत्यच्छावाकः । " आपूर्णोअस्य कलशः " इत्याग्नीध्रः । सर्वत्रानुवषट्कारः । इति माध्यन्दिन्यः प्रस्थितयाज्याः । अथ होता आगतमध्वर्युम " अयाडग्नीदि " ति पृच्छति । " अयाडिति " प्रत्युक्तः " सभद्रमकर्योन " इति जपति । अथ इडोपह्वानादि नाराशंससादनान्तं प्रातःसवनवत् । आग्नीध्रचमसात्प्रागच्छावाकचमसं भक्षयति । सन्नेषु नाराशंसेषु दक्षिणाकालः । दक्षिणासु उन्नेष्यमाणासु होत्रादयः सब्रह्मका विर्गास्यितमस्त्रेण निष्क्रम्याग्नीध्रीये द्वे आहुती जुहोति । प्रत्यगुदगाहवनीयेत्यनेन धर्मेण आवसोना च " ददामीत्यग्निर्वदति प्रानिबोधी " त्येताभ्यां मन्त्राभ्याम् । उभयोरपि स्वाहेति मन्त्रान्तः । प्रथमस्याऽग्निर्वायुश्चन्द्रआदित्यापो दक्षिणादेवताः । द्वितीयस्य दक्षिणाः । सद आगत्य अथ विहारदेशमानीतासु दक्षिणासु " कइदंकस्माअदादि " त्यनेन मन्त्रेण दक्षिणानां मध्ये यत्किञ्चित्प्राणिद्रव्यं गवादि तदनुमन्त्रयेत । अत्रापि च यद्धिरण्यादि प्रधानभूतं तदनेनाभिमृशेत् कन्यां चाऽभिमृशेत । सत्यपि प्राणित्वे दैवेन विवाहप्रकारेण दक्षिणार्थं यदि कन्या दीयते तत्रैव तदभिमर्शनं नान्यत्र कन्यादाने । केचित्सर्वत्रेच्छन्ति । सर्वदक्षिणाखण्डे अयं मन्त्रो भवति । यत्र तु आग्नीध्रीयो नास्ति तत्राप्यनुमन्त्रणं कर्तव्यम् । एवं प्रतिगृह्याग्नीध्रीयं प्राप्य हविरुच्छिष्टं सर्वे प्राश्नीयुः । एतस्मिन्नेव काले शरीरस्थित्यर्थं भोजनादिमपि कुर्यात् । प्राप्य सदः प्रविश्य यथास्वं धिष्ण्यानां पश्चादुप-

विशन्ति। अथ मरुत्वतीयेन ग्रहेण चरन्त्यध्वर्यवः। तस्य " इन्द्र मरुत्वइहपाहिसोमम्" इत्यनुवाक्या। " होतायक्षदिन्द्रंमरुत्वन्त-मि" ति प्रैषः। " सजोषाइन्द्रसगण " इति याज्या। उक्तोनु-वषट्कारः। आहृते ग्रहे अध्वर्युं प्रतिप्रस्थातारं चोपहूय द्विर्भ-क्षयेत्॥ .

अथ माध्यन्दिनपवमानानुशंसनं मरुत्वतीयं शस्त्रं शंसेत्। होता अभिहिङ्कृत्य " अध्वर्योशोंसावों " इति षडक्षरेणाहय-न्ति मध्यन्दिने शस्त्रादिषु सर्वत्र। " आत्वारथंयथोतय ". इत्येतं प्रतिपत्सञ्ज्ञकं तृचं शंसेत्। अस्य तृचस्याद्यामाज्यवदर्धर्चशो विग्राहं शंसेत्। प्रतिपृच्छेमनाः नन्तरमाहूय " इदंवसोसुतमन्ध " इत्यनुचरसञ्ज्ञकं तृचं शंसेत्। सर्वत्र प्रतिपदनुचरावित्युक्ते तृचौ वेदितव्यौ। अनन्तरं शस्त्वाहूय "इन्द्रनेदीयएदिही" ति इन्द्रं निह-वसञ्ज्ञकं प्रगाथं तिस्रस्कारं ककुबुत्तराकारं शंसेत्। सर्वत्र प्र-गाथ इत्युक्ते द्वृचो वेदितव्यः। तिस्रस्कारमिति द्वे ऋचौ ति-स्रस्कारं शंसेत्। ककुबुत्तराकारमिति तिसृणां मध्ये उत्तमे द्वे ऋचौ ककुभौ कृत्वा शंसेत्। बार्हतेषु प्रगाथेषु चतुर्थषष्ठौ पादौ पुनरभ्यसित्वोत्तरयोरवस्येत्। एवं शस्यमाने तिस्रस्कारं ककु-बुत्तराकारं भवति। एवमिन्द्रनिहवप्रगाथं शस्त्वाहूय " प्रनूनंब्र-ह्मणस्पति " रिति ब्राह्मणस्पत्यसञ्ज्ञकं प्रगाथमिन्द्रनिहवप्रगाथ-वच्छंसेत्। आज्यशस्त्रादारभ्य ब्राह्मणस्पत्यप्रगाथान्तं यत्किञ्चि-च्छस्यजातं तत्सर्वमर्धर्चशः शंसेत्। इत ऊर्ध्वं च स्तोत्रियानुरू-पाः प्रतिपदनुचराः प्रगाथाश्च अर्धर्चशः शस्याः। गायत्र्युष्णिग-नुष्टुब्बृहत्यश्च सर्वाश्चैवाचतुष्पदाश्च या ऋचस्ता अर्धर्चशः श-स्याः। पङ्क्तिषु द्विरवस्येत् द्वयोर्द्वयोः पादयोः। आश्विनशस्त्रे अर्धर्चशो वा शंसेत्। उक्तादन्यत्सर्वं पच्छः शंसेत्। पादैरवसा-

यार्धर्चान्तः सन्तानः। ब्राह्मणस्पत्यं प्रगाथं शस्त्वाहूय "अग्निर्नेते" त्येकां पच्छः शस्त्वाहूय "त्वंसोमक्रतुभि" रित्येकां पच्छः शस्त्वाहूय " पिन्वन्त्यप " इत्येकां पच्छः शंसेत् । एतास्तिस्रो धाय्याः शस्त्रान्तर्गताः। एकपातिनिऋचो धाय्या उच्यन्ते । धाय्या नामाह्वावः धायाभ्य इति वचनात् । धाय्यानन्तरमाहूय " प्रवइन्द्रायबृहत " इति मरुत्वतीयं प्रगाथमर्धर्चशः शस्त्वाहूय " जनिष्ठाउग्र " इत्येकादशर्चं सूक्तं पच्छः शंसेत् । अस्य सूक्तस्यैकभूयसी ऋचः शस्त्वाहूय"इन्द्रोमरुत्वानि " त्येतां निविदं संशेत् यथानिशान्तम् । सर्वत्र माध्यन्दिने सवने अयुजासु ऋक्षु सूक्तेषु एवमेव निविदं दध्यात् । तृचे चेन्निविदं दध्यात् तदा एकां शस्त्वा निवित् । बृहस्पतिमवादौ युजासु ऋक्षु सूक्तेषु अर्धा ऋचः शस्त्वा निविदं दध्यात् । तथा चोक्तं ब्राह्मणे 'तस्यार्धाः शस्त्वार्धाः परिशिष्य तृतीयसवने निविदं दधाति ' इति । तृतीयसवने एकां शिष्ट्वा निविदं दध्यात् । निविदुत्तमेन पदेन प्रणुत्य " त्वअग्ने " ति सूक्तशेषमुपसन्तनोति । आहूय " वयः सुपर्णा " इत्येतया परिदध्यात् । अक्षिणी मृजानः स्वक्रतमेनो ध्यायन् परिदधाति । तथा चोक्तं ब्राह्मणे ' येन मनसा प्राव्नो मन्यते तन्मनसा गच्छेत् ' इति । अथ प्रासङ्गिकम् । अतिदेशप्राप्तायां वचनात् अन्यत्रापि भवति । अन्यत्राप्येतया परिदधेदेवम् । स्तोत्रिया इदन्तु वचनं "जनिष्ठाउग्रउपोजज्ञ" इति मध्यन्दिने इत्युपदेशप्राप्तायां प्रापणार्थमिदम् । तत्राप्येतया परिदध्यात् । एषा शस्त्रक्लृप्तिः ॥

अथ शस्त्रपाठा उच्यन्ते । अभिहिङ्कृत्य "अध्वर्योशोंसावो मात्वारथंयथोतये सुम्नायवर्तयामसि तुविकूर्मिमृतीषहमिन्द्रशविष्ठसत्पतों" ३ त्रिः । "तुविशुष्मे" ति द्वे । "शोंसावो ३ मिदंवसो

सुतमन्ध" इति तिस्रोऽर्धर्चशः। "शोंसावो ३ मिन्द्रनेदीयएदिहि मितमेधाभिरूतिभिः आशन्तमशन्तमाभिरभिष्टिभिरास्वापेस्वापिभो ३ मास्वापेस्वापिभिराजिपुरंसत्पतिविश्वचर्षणि क्रधिप्रजास्वाभगों ३ कृधिप्रजास्वाभगं प्रसूतिराशचाभिर्येन उक्थिनः। "क्रतुंपुनतआनुषोंशों ३ सावों ३ प्रनूनंब्रह्मणस्पतिर्मन्त्रं वदत्युक्थम्। यस्मिन्निन्द्रो वरुणो मित्रोऽर्यमा देवा ओकांसिचक्रिरों ३ देवाओकांसिचक्रिरे तमिद्वोचेमाविदथेषुशम्भुवं मन्त्रं देवा अनेहसो ३ म्मन्त्रन्देवाअनेहसमिमश्चवाचम्प्रतिर्यथा नरः विश्वेद्वामास्मै अश्नवों ३ शोंसावो ३ मग्निनैताभगस्त्वे" ति पच्छः। "शोंसावों ३ त्वंसोमक्रतुभिरि" त्येका पच्छः। "शोंसावोंपिन्वन्त्यपोमरुत" इत्येका पच्छः। "शोंसावों प्रवइन्द्रायबृहत" इति द्वे अर्धर्चशः। "शोंसावों ३ जनिष्ठाउग्र" इत्येकादशर्चं सूक्तं पच्छः। "साकम्प्रतिष्ठाहृद्याजघन्थोंशोंसावोमिन्द्रोमरुत्वात्सोमस्यपिबतु मरुस्तोत्रोमरुद्गणः मरुत्सखामरुद्वृधः घ्नन्वृत्रासृजदपः मरुतामोजसासह यईमेनन्देवाअन्वमदन् असूर्ये वृत्रतूर्ये शंवरहत्येगविष्टौ अर्चन्नकुशाषदा परमस्यांपरावति आन्दीब्रह्माणिवर्धयन् अनाधृष्टान्योजसा कृण्वन्देवेभ्योदुवः मरुद्भिः सखिभिः सह इन्द्रोमरुत्वा इहश्रवदिहसोमस्यपिबतु प्रेमां देवोदेवहूतिमवतुदेव्याधिया प्रेदंब्रह्मप्रदक्षत्रं प्रेमंसुन्वन्तं यजमानमवतु चित्रश्चित्राभिरूतिभिः श्रवद्ब्रह्माण्यावसागमों ३ न्नस्त्रन्थनमुचिमग्वस्युमि" त्यादि। "यतः प्रजज्ञइन्द्रो अस्मेदों शोंसावों ३ वयः सुपर्णाउपसेदुरिन्द्रम्" इति परिधानीया। "उक्थंवाचीन्द्रायशृण्वतेत्वे" ति शस्त्वा जपेत्। "येत्वाहिहत्येमघवन्नि" ति याज्या। उक्तोनुवषट्कारः। आज्यवद्भक्षविधिः॥

अथ निष्केवल्यशस्त्रकल्पोभिरुच्यते। अभिहिङ्कृत्य "अत्व-

र्योशोंसात्रों अभित्त्वाशूरनोनुम” इति प्रगाथस्तोत्रियः । आहूया “भित्त्वापूर्वपीतय” इति प्रगाथोनुरूपः । एतौ प्रगाथौ ककुबुत्तराकारौ शस्त्वाहूय “यद्वावाने” ति धाय्याः पच्छः शस्त्वाहूय “ पिबासुतस्यरसिन ” इति सामप्रगाथमर्धर्चशः शस्त्वाहूय “ इन्द्रस्यनुवीर्याणिप्रवोचमि ” ति पञ्चदशर्चं पच्छः शंसेत् । अस्य सूक्तस्य अष्टौ ऋचः शस्त्वा आहूय “ इन्द्रोदेवः सोमंपिबत्वि ” त्येतामैन्द्रीन्निविदं शंसति सूक्तस्योत्तमया परिदध्यात् ॥

अथ शस्त्रपाठः ॥ अभिहिङ्कृत्य “अध्वर्योशोंसावो ३ मभित्त्वाशूरनोनुमो दुग्धाइवधेनवः ईशानमस्यजगतस्वर्दृशमीशानमिन्द्रतस्थुषो ३ मीशानमिन्द्रतस्थुषो नत्वावां अन्योदिव्योनपार्थिवः नजातोनजनिष्यतों ३ नजातोनजनिष्यते श्वायन्तोमघवन्निन्द्रवाजिनः गव्यतस्त्वाहवामहों ३ शोंसावो ३ मभित्त्वापूर्वपीतय इन्द्रस्तोमेभिरायवः समीचीनासऋभवः समस्वरन्रुद्रागृणन्तपूर्व्यों ३ रुद्रागृणन्तपूर्व्यमस्येदिन्द्रो वावृधेवृष्ण्यंशवः मदेसुतस्यविष्णवों ३ मदेसुतस्यविष्णव्यद्यातमस्यमहिमानमायवः अनुष्टुवन्तिपूर्वथों शोंसावों ३ यद्वावाने” त्येका पच्छः । “शोंसावो ३ पिबासुतस्यरसिन” इति सामप्रगाथं द्वे ऋचौ अर्धर्चशः । “शोंसावोमिन्द्रस्यनुवीर्याणी” ति पञ्चदशर्चं सूक्तं पच्छः । “तासामाहिः पत्सुतशीर्विभृवोंशोंसावोमिन्द्रोदेवः सोमंपिबतु एकजानां वीरतमः भूरिदानां तवस्तमः हर्यो स्थाता पृश्नेः प्रेता वज्रस्य भर्ता पुरां भेत्ता पुरां दर्म अपां स्रष्टा अपां नेता सत्वनां नेता इहोशंदेवोबभूवान् जाग्निर्दूरेश्रवाः उपमातिकृद्दंसनावान् इन्द्रोदेवइहश्रवदिहसोमस्यपिबतु प्रेमान्देवोदेव० श्रवद्ब्राह्मण्यावसागमो ३ न्नीचावयाअभवद्वृत्रपुत्रा” इत्यादि । “श्येनोनभीतोअतरद्रजामों ३ शोंसावो ३ मिन्द्रोयातोवसितस्यराजे” ति परिदध्यात् । एतच्छस्त्रं स्तोत्रियं शं-

सत्यादिब्राह्मणोक्तस्वरेण वा शंसेत्। अनुब्राह्मणं वा स्वर इति वचनात्। "उक्थंवाचीन्द्रायोपश्रृण्वतेत्वे" ति शस्त्वा जपेत्। "पिबासोममिन्द्रमन्दतुत्वे" ति याज्या। उक्तोनुवषट्कारः। प्रउगवद्भक्षविधिः। बृहत्पृष्ठे तु "त्वामिद्धिहवामहे त्वंह्येहिचेरवे" इति प्रगाथौ स्तोत्रियानुरूपौ ककुबुत्तराकारं शस्यौ। "उभयंश्रृणवच्चन" इति सामप्रगाथः। अन्यत्समानम्॥

अथ होत्रकाणां शस्त्राणि॥ तानि पञ्चाहावानि माध्यंदिने। स्तोत्रियानुरूपेभ्यः प्रगाथेभ्यः प्रगाथान्तरेभ्यः पारिधानीयाभ्य इति॥ अथ मैत्रावरुणशस्त्रम्। अभिहिङ्कृत्य "अध्वर्योशोंसावों ३ कयानश्चित्रआभुव" इति तृचः स्तोत्रियोर्धर्चशः "शोंसावों ३ कयात्वन्नऊत्ये" ति तृचोर्धर्चशः अनुरूपः। "शोंसावोंकस्तमिन्द्रत्वावसुमि" ति तृचः प्रगाथः। अर्धर्चशः शंसेत्। "शोंसावोंसद्योहजात" इति सूक्तं पञ्चर्चं पच्छः। "एवात्वामिन्द्रवज्रिन्नत्रे" त्येकादशर्चं सूक्तं पच्छः। आहूयोत्तमया परिदध्यात्। "उक्थंवाचीन्द्राये" ति शस्त्वा जपेत्। "उशन्नुषुणः सुमनाउपाक" इति याज्या। उक्तोनुवषट्कारः। स्वेन प्रातःसवनीयकेन शस्त्रेण समो भक्षादिः॥ अथ ब्राह्मणाच्छंसिनः। अभिहिङ्कृत्य "अध्वर्योशोंसावोंतमोदस्मसृतीषहमि" ति प्रगाथस्तोत्रियः। "शोंसावों तत्त्वायामिसुवीर्यमि" ति प्रगाथोनुरूपः। एतौ प्रगाथौ ककुबुत्तराकारशस्यौ। "शोंसावोमुदुत्येमधुमत्तमा" इति प्रगाथोऽर्धर्चशः। "शोंसावोमिन्द्रः पूर्भिदातिरद्दासमर्कैरि" ति सूक्तमेकादशर्चं पच्छः। "उदुब्रह्माण्यैरतश्रवस्ये" ति षड्र्चं पच्छः। आहूयास्य सूक्तस्योत्तमया परिदध्यात्। "उक्थंवाचीन्द्राये" ति शस्त्वा जपः। "ऋजीषीवज्री" ति याज्या। उक्तोनुवषट्कारः। स्वेन प्रातःसवनिकेन शस्त्रेण समो भक्षविधिः। बृहत्पृष्ठे तु "अभिप्रवः

सुराधसमि" ति स्तोत्रियः प्रगाथः ककुबुत्तराकारशस्यः । अनुरू-पादि समानमन्यत् ॥ अथाच्छावाकस्य । अभिहिङ्कृत्य "अध्वर्यो शोंसावों ३ तरोंभिर्वोविदद्वसुमि" ति स्तोत्रियः प्रगाथः । "शों-सावोंतरणिरित्सिषासती" ति प्रगाथोनुरूपः । एतौ प्रगाथौ ककु-बुत्तराकारशस्यौ । "शोंसावोंमुदिन्वस्यरिच्यते" इति प्रगाथोऽर्ध-र्चशः । "शोंसावोंभूयइद्वावृधेवीर्यायें" ति सूक्तं पञ्चर्चं पच्छः । "इमामूषुप्रभृतिंसातयेधा" इति एकादशर्चं सूक्तं पच्छः । अस्य सूक्तस्योपोत्तममुत्तमाद्धरेत्सर्वत्र । "अस्मभ्यंतद्धर्यश्वप्रयन्धोंशोंसा-वोंशुनन्हुवेममघवानमि" ति परिदध्यात् । "उक्थंवाचीन्द्रायें" ति शस्त्वा जपः । "पिबावर्धस्वतवे" ति याज्या । उक्तोनुवषट्कारः । ब्राह्मणाच्छंस्यवद्भक्षविधिः । इति माध्यन्दिनं सवनम् । अथ मृ-गतीर्थसर्पणं पूर्ववत् ॥

अथ तृतीयसवनमुत्तमस्वरेण । तत्र प्रथममादित्यग्रहेण चरन्ति "आदित्यानामवसानूतनेने"त्यनुवाक्या । "होतायक्षदादित्यान्प्रि-यान्प्रियधाम्नः" इति प्रैषः । "आदित्यासो अदितिर्मादयन्तामि" ति याज्या । एतं ग्रहं नेक्षेत हूयमानम् । नानुवषट्करोति न भक्षयति मा के चिदत्र मृगतीर्थेसर्पणं कुर्वन्ति । अथार्भवपवमानार्थं ब्रह्मा मैत्रावरुणश्च पूर्ववद्विपुट्होमौ हुत्वा सर्पणं कुर्यात् । "ब्रह्मन्स्तो-ष्यामः प्रशास्त" इति श्रुत्वा ब्रह्मा "स्वरिन्द्रवन्तः सवितृप्रसूता" इति जपित्वा "स्तुध्वमि" त्युच्चैर्ब्रूयात् । मैत्रावरुणस्तु पूर्ववत् । स्तुते पवमाने अङ्गारविहरणानन्तरं मनोतादिपाठिरडान्तं पशुकर्म कर्तव्यम् । मनोतायै संप्रेषितः प्रशास्ता "त्वंह्यग्नेप्रथम" इति सू-क्तमन्वाह । अथ हविर्यागः । "पाहिनोअग्ने पायुभिरजस्रैरि" त्यनुवाक्या । "होतायक्षदग्निंच्छागस्यहविषआददद्य० घस्न्नूनं० क-रदेवाग्निर्जुषतामि" ति प्रैषः । "प्रकारव" इति याज्या । वनस्पतियागः ।

"होतायक्षद्वनस्पतिमभि० यत्राग्नेराज्यस्य हविषः प्रियाधामानि यत्र सोमस्याज्यस्यहविषः प्रियाधामानि यत्राग्नेश्छागस्यहविषः प्रियाधामानि यत्रवनस्पतेः प्रियापाथांसि यत्रदेवानामि" त्यादि। एवं स्विष्टकृत्प्रैषे प्रियाधामान्ययाडिति विशेषः। इडायां पूर्ववदागूः। अथैन्द्रैः पुरोडाशैश्चरन्ति। तृतीये "धानाः सवन" इत्यनुवाक्या "होतायक्षदिन्द्रंहारिवां" इति तृतीयसवनलिङ्गकः प्रैषः। अनेनैव प्रैषेण पूर्वोक्तन्यायेन यजति। अथ स्विष्टकृतः। अग्नेस्तृतीये सवने "हिकानिष" इत्यनुवाक्या। "होतायक्षदग्निपुरोडाशानामि" ति प्रैषः। "हविरग्नेर्वीही" ति याज्या। अथोन्नीयमानेभ्यः प्रेषितो मैत्रावरुणः अनभिहिङ्कृत्य "इहोपयाति" इति नवर्कं सूक्तमन्वाह। आद्योत्तमे त्रिर्ब्रूयात्। "होतायक्षदिन्द्रन्तृतीयस्यसवनस्ये" ति प्रैषेण प्रेषितः होता "इन्द्रऋभुभिर्वाजवद्भिरि" त्यनया प्रस्थितयाज्यया यजति। प्रशास्त्रादयः स्वस्वनामादिष्टाः मन्त्रो यजन्ति। "इन्द्रावरुणासुतपावि" ति प्रशास्ता। "इन्द्रश्चसोमंपिबतंबृहस्पत" इति ब्राह्मणाच्छंसी। "आवोवहन्तुसप्तय" इति पोता। "अमेवन्नः सुहवाअही" ति नेष्टा। "इन्द्राविष्णू पिबतंमि" त्यच्छावाकः। "इमंस्तोममर्हत" इत्याग्नीध्रः। सर्वत्रानुवषट्कारः। एतास्तृतीयसवनप्रस्थितयाज्याः। आगतमध्वर्युम् "अयाडग्नीदि" ति पृच्छति। "अयाडि" ति प्रत्युक्तः "समद्र्यक्षीरि" ति जपति। इडोपाह्वानं प्रकृतिवद्भवति। प्रकृत्याऽत ऊर्ध्वं पशिवडा इति वचनात्। पुनश्छन्दोनुवर्तत एव हारियोजनपर्यन्तः। अत्रान्तरेडां प्राश्य होतृचमसं भक्षयेदित्यारभ्याऽऽनाराशंससादनान्तं माध्यन्दिनसवनवत्करोति। मन्त्रेषु नाराशंसेषु सर्वे चपाल्वितो निर्मस्थितपक्षेण निष्क्रम्य सवनीयपुरोडाशस्य मृदुन्तरांशा-

त् किञ्चित्किञ्चिदादाय त्रिस्त्रिस्त्रः पिण्डान्कृत्वा प्रतिस्वं चमसेभ्यो दक्षिणतः स्वान् पितृपितामहप्रपितामहानुदिश्य क्षिपेयुः " अत्रपितरोमादयध्वंयथाभागमावृषायध्वम् " इति मन्त्रेण । उपवीतिना पिण्डदानमविशेषेण जीवत्पितृकाणां मृतपितृकाणां च भवति । ततः सव्यावृत आग्नीध्रीयं प्राप्य हविरुच्छिष्टं सर्वे प्राश्नन्ति । अन्यदपि भोजनादिकर्मापि क्षुन्निवृत्त्यर्थं कुर्युः । अथ सदः प्रसृप्य सावित्रेण ग्रहेण चरन्ति । " अभूद्देवः सविता " इत्यनुवाक्या । " होतायक्षद्देवंसवितारमि " ति प्रैषः । "दमूनादेवः सवितावरेण्य " इति याज्या । नानुवषट्करोति न भक्षयति । अथार्भवपवमानानुशंसनं वैश्वदेवमच्छावाकः शस्त्रं शंसेत् । शंसिष्यन् सर्वा दिशो ध्यायेत् । यस्यां दिशि यजमानस्य द्वेष्योऽस्ति न तां ध्यायेत् । " अध्वर्योशोंशोंसावोमि " ति सप्ताक्षर आहावस्तृतीयसवने । शस्त्रादिषु सर्वत्र षोडशिन ऊर्ध्वं पर्यायप्रभृतिषु " शोंसावोमि " ति प्रातःसवनवदाहावः । अभिहिङ्कृत्य " तत्सवितुर्वृणीमहे अद्यानोदेवसवितरि " ति वैश्वदेवस्य प्रतिपदनुचरौ । आद्यामृचमाज्यावत् शंसेत् । " अभूद्देव " इति सावित्रं सूक्तं षडृचं पच्छः । अस्य पञ्च शस्त्वा " सवितादेव " इति विंशतिपदां निविदं दध्यात् । एकां शिष्टा तृतीयसवन इति वचनात् । " एकयाचे " ति कल्पजा धाय्या । "प्रद्यावायज्ञैः पृथिवीऋतावृधे " ति द्यावापृथिवीयं सूक्तं पञ्चर्चं पच्छः । अस्य चतस्रः शस्त्वा " द्यावापृथिवीसोमस्यमत्सताम " इति पञ्चदशपदां निविदं दध्यात् । " सुरूपकृत्नुमूतये " इत्येकामर्धर्चशः । " तत्क्षथमि " ति सूक्तं पञ्चर्चं पच्छः । अस्य चतस्रः शस्त्वा "ऋभवोदेवास " इति सप्तदशपदां निविदं दध्यात् । " अयंवेनः, येभ्योमाता, एवापित्रे " इति तिस्रो धाय्याः । " आनोभद्रा "

इति दशर्चं सूक्तं वैश्वदेवं पच्छः । अष्टौ शस्त्वा "विश्वेदेवाः सोमस्यमत्सन्नि" ति विंशत्पदां निविदं दध्यात् । नवमीमृचं शस्त्वाहूय "अदितिर्द्यौरि" ति परिदध्याद्भूमिमुपस्पृशन् द्विः पच्छः सकृदर्धर्चशः । इयमेव परिधानीया सर्वत्र वैश्वदेवे भवति सूक्तान्तरे सत्यपि । अस्मिन् शस्त्रे प्रतिप्रतीकमाहावः । निविदां चादौ । एषा शस्त्रक्लृप्तिः ॥

अथ शस्त्रपाठः । अभिहिङ्कृत्य "शोंसावों ३ तत्सवितुर्वृणीमह" इति तृचोऽर्धर्चशः । आद्यामान्यवत् । "शोंसावो ३ मद्यानोदेवसवितरि" ति तृचोऽर्धर्चशः । "शोंसावोमभूद्देव" इति षड्टचं सूक्तं पच्छः । "एवेवतस्युः सवितुः सवायतों ३ शोंसावोंसविताद्देवः सोमस्याप्त्वित्तु हिरण्यपाणिः सवितासुजिह्वः सुबाहुः स्वङ्गुरिः त्रिरहंत्सत्यसवनः प्रासुवद्वसुधितीउभेजोष्ट्रीसवीमनि श्रेष्ठंसावित्रमासुवं दोग्ध्रींधेनुं वोढारमनड्वाहम् आशुंसप्तिं पुरन्धियोषां जिष्णूरथेष्ठं सभेयंयुवानं परामीवांमाविपत्पराघशंसं सवितादेवइहश्रवदिहसोमस्यमत्सत् प्रेमांदेवोदेवहू० श्रवद्ब्रह्माण्यावसामसों येनैत्रिरहन्त्सवि० आदित्यैर्नोअदितिशर्मयच्छत्सों ३ शोंसावेमिकयाचदशभिश्चस्वभूते द्वाभ्यामिष्टयेविंशत्याचों ३ तिसृभिश्चवहसे त्रिंशताच नियुद्भिर्वायविहताविमुञ्चों शोंसावों प्रद्यावायज्ञैः पृथिवीऋतावृधे"ति पञ्चर्चं पच्छः । "समुद्रअन्तःकवयः सुदीतयों शोंसावोंद्यावापृथिवीसोमस्यमत्सतां पिताचमाताच पुत्रश्चप्रजननश्च धेनुश्चऋषभश्च धन्याचधिषणाच सुरेताश्चसुदुघाच शम्भूश्चमयोभूश्च ऊर्जस्वतीच पयस्वतीच रेतोधाश्चरेताश्च द्यावापृथिवीइहश्रुतामिहसोमस्यमत्सतां प्रेमान्देवीदेवहूतिमवतान्देव्याधिया प्रेदंब्र० प्रेमंसुन्वन्तयजमानमवतां चित्राभिस्त्राभिरूतीभिः श्रुतांब्रह्माण्यावसागमतों ३ तद्राधोअद्य शोंसावोंऋभुरुपक्तनुसूनय"

इत्येका अर्धर्चशः । “ शोंसावोन्तक्षन्नथमि ” ति सूक्तं पञ्चर्चं पच्छः । “ तेभ्योहिन्वन्तुमातयेधिगेजिषोंशोंसावोमृभवोदेवाः सोमस्यमत्सन् विष्ट्वीस्वपसः कर्मणासुहस्ताः धन्याधनिष्ठाः शम्याशमिष्ठाः शच्याशचिष्ठाः येधेनुंविश्वजुवंविश्वरूपामरक्षन् अरक्षन्धेनुमभवद्विश्वरूपी अयुञ्जतहरीअयुर्देवाउप अबुध्नंसङ्गनीनामदंसः संवत्सरेस्वपसोयज्ञियम्भागमायन् ऋभवोदेवा ३ इश्रवन्निहसोमस्यमत्सन् प्रेमान्देवादेवहूतिमवन्तुदेव्याधिया प्रेदंब्र० प्रेमंसुन्वन्तंयजमानमवन्तु चित्राश्चित्राभिरूतिभिः श्रुवन्ब्रह्माण्यावसागमो ३ मृभुर्भरायसंशिशतुमातिमि ” त्यादि । “ शोंसावोमयंवेनश्चोदयत्पृश्निगर्भा ” इत्येका पच्छः । “ शोंसावोयेभ्योमातामधुमत्पिन्वतेपय ” इत्येका पच्छः । “ शोंसावोमेवापित्रेविश्वदेवाय ” इत्येका पच्छः । “ शोंसावोमानोभद्राः क्रतव ” इति नवर्चं सूक्तं पच्छः । “ व्यशेमदेमदेवहितंयदायो शोंसावोविश्वेदेवाः सोमस्यमत्सन् विश्वेवैश्वानराः विश्वेहिविश्वमहसः महिमहान्तः तक्कांनानेमभीधावानः आस्क्राःपचतवाहसः वातात्मानोअग्निदूताः येत्राश्वपृथिवीश्चातस्थुः अपश्चस्वश्च ब्रह्मचक्षत्रञ्च बर्हिश्चवेदिश्च यज्ञश्चोरुचान्तरिक्षं येस्थत्रयएकादशाः त्रयश्चत्रिंशश्चत्रयश्चत्रीचशता त्रयश्चत्रीचसहस्रा तावन्तोभिषाचः तावन्तोरातिषाचः तावतीः पत्नीः तावतीर्ग्नाः तावन्तउदरणे तावन्तो निवेशने अतोदेवादेवाभूयांसस्थ मावोदेवाअपिशसामापरिशसात्प्रक्षि विश्वेदेवाइहश्रवन्निहसोमस्यमत्सन् प्रेमान्देवादेवहूतिमवन्तुदेव्याधिया प्रेदंब्र० प्रेमंसुन्वन्तंयजमानमवन्तु चित्राश्चित्राभिरूतिभिः श्रवन्ब्रह्मण्यावसागमो ३ शतमिन्नु ” इत्यादि । “ शोंसावोमदितिर्द्यौरि ” ति परिधानीया । द्विः पच्छः सकृदर्धर्चशः भूमिमुपस्पृशेत् । “ उक्थंवाचीन्द्रायदेवेभ्यआश्रुत्वेत्वे ” ति शस्त्वा

जपेत्। "विश्वेदेवाः शृणुतेमहवम" इति याज्या। उक्तोनुवषट्कारः। प्रउगवद्भक्षविधिः। अथ "घृतस्ययजे" त्युक्ते "घृताहवनोघृतपृष्ठोअग्निरि" त्यनादिश्य यजति उपांशु। "सौम्यस्ययजे" त्युक्ते "त्वंसोमपितृभिः संविदान" इत्यनयानादिश्य यजत्युच्चैः। पुनः "घृतस्य यजे" त्युक्ते "उरुविष्णोविक्रमस्वे" त्यनयानादिशन् यजति उपांशु। अन्यतरपक्षे "ये० अग्नाविष्णूमहि० व्ययात् वौ०" उपांशु। आहृतं घृतमिश्रं सौम्यं चरुमुद्गातृभ्यः पूर्वमादाय तत्र आत्मानमवेक्षते। "यत्तेचक्षुर्दिवियत्सुपर्ण" इति मन्त्रेण। "दधात्वि" ति मन्त्रान्तः। ततः सौम्यचरुस्थेनाज्येनाङ्गुष्ठोपकनिष्ठिकाभ्यामक्षिणी अञ्ज्य छन्दोगेभ्यः प्रदातुमध्वर्यवे प्रयच्छेत्। घृतस्याल्पत्वाद्यद्यात्मानं न पश्येत् तदा "हृदिस्पृक्क्रतुस्पृक्चो० धारयाममी भद्रंकर्णेभिः" इति जपेत्। अथ शालाग्निविहरणानन्तरमाग्नीध्रः पात्नीवतस्य यजति। "एभिरग्नेसरथमि" त्यनयानादिश्य यजति उपांशु। यद्यप्युच्चैः प्रैषः स्यात्तथाप्युपांश्वेव याज्यां ब्रूयात्। उपांश्वेवेत्यवधारणा। नानुवषट्कारः। आग्नीध्रो नेष्टुर्धिष्ण्यसंस्थितमध्वरेण नेष्टारमनुप्रपद्य तस्योपस्थमासीनो ग्रहं भक्षयति। नोपस्थ आसीनेति शास्त्रान्तरे प्रतिषेधात्तत्समीप एव भक्षयेदिति केचित्। अध्वर्युमुपहूय भक्षयित्वा यथेतं निष्क्रामति। अथ "ब्रह्मन्स्तोष्यामप्रशास्त" रिति श्रुत्वाभिपवमानवदनिसृजेत् ब्रह्मा मैत्रावरुणश्च॥ अथ होता आग्निमारुतं शस्त्रं सत्वरितं शंसेत्। स्तोत्रोपाकरणकालादारभ्य प्रावृतशिरस्को भवेत्। अभिहिङ्कृत्याहूय "वैश्वानरोयपृथुयाजसेविप" इति वैश्वानरीयमेकादशर्चं सूक्तं पच्छः। अस्य सूक्तस्याद्यां पच्छ ऋगावानं त्रिः शंसेत्। तृतीयेन वचनेनोत्तरां मन्त्रनुयात्। दश शस्त्वाहूय "अग्निर्वैश्वानर" इति पञ्चदशपदां निवि-

दं दध्यात् । "शों० शन्नः करत्पर्वत" इत्येका धाय्या । आहूय "प्र-त्वक्षस" इति मारुतं सूक्तं षडृचं पच्छः । पञ्च शस्त्वाहूय "मरुतो-देवा" इति चतुर्दशपदां निविदं दध्यात् । "शों० यज्ञायज्ञावो अग्नयेशों० देवोवोद्रविणोदा" इति प्रगाथौ स्तोत्रियानुरूपौ ककु-बुत्तराकारशस्यौ । "शों० प्रतव्यसींनव्यसीमि"ति जातवेदस्यमष्टर्चं सूक्तं पच्छः । सप्त शस्त्वाहूय "अग्निर्जातवेदा" इति षोडशपदां निविदं दधाति । आहूय "आपोहिष्ठे"ति आपोहिष्ठीयानां शंसने क्रियमाणे अन्वारब्धेषूद्गातृषु अपावृतशिरस्को भूत्वा अप उपस्पृ-शन् विलम्बितया वृत्त्या शंसेत् । तत ऊर्ध्वं द्रुततरमेव शंसेत् । "उतनोहिर्बुध्न्यः शृणोत्वि"त्येका धाय्या । "देवानांपत्नीरुशती" ति द्वे "एकामहमि"ति द्वे "यावीरुधीरन्या, इदं यमप्रस्तरं, मात-लीकव्यैः, उदीरताम्, आहंपितॄन्, इदंपितृभ्योनमो" इति धाय्याः । "स्वादुष्किलायमि"ति चतस्रः । आसां मध्ये आहावः । "ययोरो-जसे"ति कल्पजा । "विष्णोर्नुकं तनुन्तन्वन्नजमो" इति धाय्याः । "एवानइन्द्रोमघवे" त्यनया भूमिमुपस्पृशन् परिदध्यात् । अस्या ऋचो मध्यमे वचने उत्तमपादमवशिष्य विरमेत् यावन् ध्रुवावन-यनं भवति । तस्मिन्नवनीते शेषं समापयेत् । केचित्तृतीयवचने त्री-न्पादानुक्त्वा विरम्य ध्रुवावनयनानन्तरमन्त्येन पादेन प्रणुवन्ति । यदि प्रागेव ध्रुवोवनीतस्तदा ध्रुवावनयनं न काङ्क्षणीयम् । अस्मिञ्छ-स्त्रे प्रतिप्रतीकमाहावः निविदां त्वादौ स्वादुष्किलीयानां मध्ये च । एषा आग्निमारुतस्य क्लृप्तिः ॥

अथ शस्त्रपाठः ॥ अभिहिंकृत्य "अध्वर्योशोशोंसावों ३ वैश्वानरायपृथुपाजस" इति सूक्तमेकादशर्चं पच्छः । आद्या-मृगावानं पच्छः । "अग्नेताविश्वापरिभूरसित्मनोंशोंसावोमग्निर्वै-श्वानरः सोमस्यमत्सत् विश्वेपान्देवानांसमित् अजस्रन्दैव्यंज्यो-

पच्छः शोंसावोमार्हपितॄन्त्सुविदत्राँनि"त्येका पच्छः। "शोंसावोमिदं पितृभ्य" इत्येका पच्छः। " शोंसावोंविष्णोर्नुकमि"त्येका पच्छः। "शोंसावोन्तन्तुन्तन्वन्नजस" इत्येका पच्छः । "शोंसावो ३ मेत्रानइन्द्रोमघवाविरशी"ति परिधानीया पच्छः। भूमिमुपस्पृशन्नुत्तमेन वचनेन ध्रुवावनयनं काङ्क्षेत्। " उक्थंवाचीन्द्रायदेवेभ्यो आश्रुतायत्त्वे"ति शस्त्वा जपेत् । " अग्नेमरुद्भिः शुभयद्भिर्ऋक्वभिरि"ति याज्या। उक्तोनुवषट्कारः। मैत्रावरुणवद्भक्षविधिः॥ अस्य शस्त्रस्य प्रतिगरो विशेषः । प्रथमायामृचि आद्येवसानद्वये ऋगन्ते "ओथामोदैवोमि"ति प्रतिगरप्रणवान्तः " स्वादुष्किलीयासु "मदामोदैवमोदामोदैवोमि"त्यामौ प्रतिगरौ यथाक्रममवसानप्रणवयोः। प्लुतादेरप्लुतादेः प्रतिगरस्याऽपवादः। प्रणवे प्रणव इत्यस्यापि अपवादः। अथाग्निमारुतानन्तरं मृगतीर्थसर्पणम् । अस्मिन्काले अध्वर्युर्नातिसृजेत् । तदा अनतिसृष्टा एव सर्पयेयुः । अथानुयाजादि सूक्तवाकप्रैषे विशेषः । अथ प्रैषसमाम्नाययोर्द्वितीयसूक्तवाकप्रैषस्समत्र ब्रूयात् । तत्र यथादैवतं निगमनं कर्तव्यम्। "अग्निमद्य० सुन्वन्यज० शान् गृह्णन्नग्नयआज्यंगृह्णन्त्सोमायाज्यंबध्नन्नग्नयेच्छागं सुन्वन्निन्द्रायसोमंभृजन्हारिभ्यांधानाः सूपस्था अद्यदेवोवनस्पतिरभवदग्नये आज्येनसोमायाज्येनाग्नयेच्छागेनेन्द्रायसोमेनहारिभ्यांधानाभिरघ्नतमेदस्त" इत्यादि । हारियोजनान्ते पत्नीसंयाजान्ते अध्वर्युर्यदा ब्रूयात्तदा प्रशास्ताऽतिसर्जनमेव कुर्यात् पुनः सर्पणं न पुनः सदःप्रवेशनं चात्र । प्रयोजनाभावात् । मृगतीर्थसर्पणसदःप्रवेशनाद्यन्नात् हारियोजनादि यज्ञपुच्छमुत्तरत्र वक्ष्यते ॥ सन्तिष्ठतेग्निष्टोमः ॥

इति मञ्चनार्यभट्टविरचितायामाश्वलायनश्रौतसूत्रप्रयोगदीपिकायां पञ्चमोऽध्यायः ॥

अथ अत्यग्निष्टोम उच्यते ॥ सर्वमाद्यवत् । अयं तु विशेषः । आग्निमारुतादूर्ध्वं षोडशिनं ग्रहं गृह्णन्त्यध्वर्यवः । तस्य तु शस्त्रं षोडशिवद्भवति । तच्च षोडशिशस्त्रं षोडशिव्याख्यानसमये वक्ष्यते । ततो मृगशीर्षमर्पणम् । ततोनुयाजादि यज्ञपुच्छम् । समाप्तोऽत्यग्निष्टोमः ॥

अथ उक्थ्यसंज्ञो ज्योतिष्टोमो वक्ष्यते । तस्य सवनीयपशोः प्रागग्निष्टोमः । इयान्विशेषः । प्रवर्ग्योऽत्र नास्ति उपसन्मात्रमेव कुर्वन्ति । सवनीयौ द्वौ पशू छाग आग्नेय ऐन्द्राग्नश्च । ऐन्द्राग्न उक्थे द्वितीय इतिवचनात् । आवाहने वैकल्पिकावाज्यभागावावाह्य "अग्निमावह इन्द्राग्नीआवह वनस्पतिमावह इन्द्रवसुमन्तमावह" इत्यादि । आप्रीगो विशेषः । "मेधपतिभ्यांमेधौ प्राभ्यामग्निंभरत" । "माताउदीचीनामनयोः पदोनिधत्तात् पृथिवींशरीरे एकधैकधानयोस्त्वचावातात् पुरानाभ्याअपिशसोवयेउत्खिदतादन्तरन्तरेवोष्माणंवारयध्वात् श्येनमनयोर्वक्षःकृणुतात् प्रशसाबाहूशलादोषणीकश्यपेवा सनाच्छिद्राः श्रोणीः कवषोरूस्रेकपर्णाष्ठीवन्तः षड्विंशतिः षड्विंशतिरनयोर्वङ्क्रय० गात्रंगात्रमनयोरनून० वनिष्टुअनयोर्मा राविष्टोरूकम्" मित्यूहः । आग्नेयस्य पशोः प्रदानत्रयस्य याज्यानुवाक्यास्तथा अग्निष्टोमे उक्ताः । ऐन्द्राग्नस्य तु निरूढपशावुक्ताः । अत्र वनस्पतियागे विशेषः । "होतायक्षद्वन० धित यत्राग्नेः० मैन्द्राग्नस्य त्येनो० रभीयसाविवकृत्वी"त्यादि । स्विष्टकृति अयाडिति विशेषः । यदि पूर्वकारिण ऐन्द्राग्नमेव कुर्वन्ति तदा अधिगुप्रभृति सर्वं निरूढवत् । बृहत्पृष्ठनिबन्धनो विशेषः पूर्वमेवोक्तः । ततः सर्वमाग्निमारुतान्तमग्निष्टोमवत् । आग्निमारुतादूर्ध्वमुक्थानामुक्थ्यप्रयुक्तानि त्रीणि शस्त्राणि भवन्ति । तानि [illegible]होत्राणि भवन्ति । स्तोत्रियेभ्योऽनुरूपेभ्य अनुरूपानन्तरेभ्यः परिधानीयाभ्य इत्यावापस्थानानि ॥

अथ मैत्रावरुणं शस्त्रम् ॥ "हिं भूर्भुवस्वरो ३ मध्वर्योंशोशों-सावोमेष्वूपु ब्रवशणित" इति स्तोत्रियस्तृचोर्धर्चशः । "शोंसावो ३ माग्निरश्वामिभारिते"त्यनुरूपस्तृचोर्धर्चशः । "शोंसावोंचर्षणीधृत-मस्तभ्नाद्यामसुर" इति तृचौ पच्छः । "इन्द्रावरुणायुवमि"ति सूक्तं दशर्चं पच्छः । "आवांराजानावि"ति सूक्तं पञ्चर्चं पच्छः । तत्राहूयोत्तमया परिदध्यात् । "उक्थंवाचीन्द्रायदेवेभ्य" इति शस्त्वा जपः । "इन्द्रावरुणामधुमत्तमस्ये"ति याज्या । उक्तोनुवषट्कारः । स्वेन प्रातःसवनीयकेन समो भक्षः ॥

अथ ब्राह्मणाच्छंसिनः ॥ अभिहिङ्कृत्य "शोंसावोंवयमुत्वा-मपूर्व्ये"ति प्रगाथस्तोत्रियः । "शोंसावोंयोनइदमिदंपुरे"ति प्रगाथोनुरूपः । एतौ प्रगाथौ ककुबुत्तराकारशस्यौ । तृतीयपञ्चमौ पादौ पुनरभ्यसित्वोत्तरयोः पादयोरवसाने क्रियमाणे सर्वाः ककुभो भवन्ति । "शोंमावों प्रमंहिष्ठीये"ति षट्टचं सूक्तं पच्छः । "उदप्रुत" इति द्वादशर्चं सूक्तं पच्छः । "अच्छाम" इति सूक्तमेकादशर्चं पच्छः । आहूयोत्तमया परिदध्यात् । "उक्थंवाची-न्द्रायदेवेभ्य" इति शस्त्वा जपः । "बृहस्पतेयुवमिन्द्रश्चवस्व" इति याज्या । उक्तोनुवषट्कारः । स्वेन प्रातःसवनीयकेन समो भक्षः ॥

अथाच्छावाकस्य ॥ अभिहिङ्कृत्य "अध्वर्योशोशोंसावोमधाही-न्द्रगिर्वण" इति तिस्रः स्तोत्रियार्धर्चशः । "शोंसावोमियन्त इन्द्र-गिर्वण" इति अनुरूपस्तृचोर्द्धर्चशः । "शोंसावोमृतुर्जनित्री" ति त्रयोदशर्चं सूक्तं पच्छः । "नूमत" इति सूक्तं सप्तर्चं पच्छः । "भवामित्र" इति पञ्चर्चं पच्छः । "संवांकर्मण" ति सूक्तम-ष्टर्चं पच्छः । आहूयोत्तमया परिदध्यात् । "उक्थंवाचीन्द्रायदे-वेभ्य" इति शस्त्वा जपः । "इन्द्राविष्णूमदपतीमदानामि" ति याज्या । स्वेन प्रातःसवनिकेन समो भक्षः । ततो मृगतीर्थ-

सर्पणं ततोनुयाजादि । सूक्तवाकप्रैषे " अग्निमद्य " त्यादि० " गृह्णन्नग्नयआज्यंगृह्णंत्सोमायाज्यंबध्नन्नग्नयइन्द्राग्निभ्यांछागौसु- म्वान्निन्द्रायसोमं० ग्रयअग्न्येनसोमायाज्येनाग्नयइन्द्राग्निभ्यांछागा- भ्यामिन्द्रायसोमेनहरिभ्योधानाभिरघ्नंतमेदस्तः प्रतिपचताग्रभीषु रवीवृधन्तपुरोडाशैरयाडिन्द " इत्यादि । देवताश्चैवैकपशुका इति वचनात् । शंयुवाकादि यज्ञपुच्छं समानम् । समाप्त उक्थसञ्ज्ञो ज्योतिष्टोमः ॥

अथ षोडशी ॥ सोग्निष्टोमेन व्याख्यातः । विशेषो वक्ष्यते । तत्र सवनीयास्त्रयः पशवः आग्नेय ऐन्द्राग्न ऐन्द्रश्चेति । तत्र द्वौ छागौ तृतीयो मेषः । ऐन्द्रो वृष्णिः षोडशिनि तृतीय इति- वचनात् । आवाहने वैकल्पिकावाज्यभागावावाह्य " अग्निमा- वह इन्द्राग्नीआवह इन्द्रमावह वनस्पतिमावह इन्द्रंवसुमन्तमि " त्यादि । अध्रिगुप्रैषः सौत्रामणिवत् बहुवचनान्तोहः कर्तव्यः । आग्नेयैन्द्राग्नयोर्याज्यानुवाक्याप्रैषाः पूर्वमेवोक्ताः । ऐन्द्रस्य वपा- याः " इन्द्रंनरोनेमधिताहवामि " त्यनुवाक्या । " होतायक्षदि- न्द्रंमेषस्यवपायामेदस " इति प्रैषः । " उरुन्नोलोकमनुनेषिविद्रा- नि " ति याज्या । अथ पुरोडाशस्य । " यइन्द्रशुष्ण " इत्य- नुवाक्या । " होताय० दिन्द्रपुरोडाशस्य " ति प्रैषः । " प्रस- साहिष " इति याज्या । अथ हविषः । " इन्द्रोराजाजगत " इत्यनुवाक्या । " होताय० दिन्द्रंमेषस्यहविषआदद्य० मध्यन्नूनं० करदेवन्द्रोजुषतामि " ति प्रैषः । " स्वस्तयेवाजिभिश्च " ति याज्या । वनस्पतियागे " होताय० इन० यत्राग्नेराज्यस्यह० यत्र सोमस्याज्यस्यहविषः प्रि० यत्राग्नेश्छागस्यहवि० यत्रेन्द्राग्न्यो- श्छागस्यह० यत्रेन्द्रस्यमेषस्यहविष० यत्रवनस्पतेः प्रियापाथां- सियत्रदेवा० तत्रैतान् प्रस्तु० रभीयसइवक्षत्वी " त्यादि । "अ

याडग्निरग्नेराज्यस्यहविष " इति विशेषः । यद्यध्वर्यव ऐन्द्रमेव कुर्वन्ति तदा तदनुसारेण प्रयोगः कर्तव्यः । अन्यत्सर्वमग्निष्टोमवत् । आग्निमारुतानन्तरं त्रीण्युक्थशस्त्राणि भवन्ति । ततो होता षोडशिसञ्ज्ञकशस्त्रं शंसेत् । षोडशी द्विविधा अविहृतो विहृतश्च । यत्र सामगा यदि नानदं षोडशिसाम कुर्युस्तदा अविहृतः षोडशी शंस्तव्यः । यदि गौरिवीतं साम तदा विहृतषोडशी शंस्तव्यः इति ब्राह्मणम् ॥

अथाविहृतस्य क्लृप्तिरुच्यते । अस्मिञ्छस्त्रे त्रय आहावः । स्तोत्रियाय निविदे परिधानीयाया इति । केचित् विहृतरषोडशी आहावो नाविहृत इत्याचक्षते । तेषां मतेऽविहृतः पञ्चाहावो भवति । स्तोत्रियानुरूपाभ्यां तदनन्तरं निविदे परिधानीयाया इत्याहावस्थानानि । अभिहिङ्कृत्य " अध्वर्योशोशोंसावोमि " त्याहूय " असाविसोमइन्द्रत " इति स्तोत्रियोर्धर्चशः । पञ्चाहावपक्षे " शोंसावो २ मिममिन्द्रसुतंपिबे " त्यनुरूपस्तृचोर्धर्चशः । पञ्चाहावपक्षे " शोंसावोमात्वावहन्तुहरय " इति प्रगाथस्तृचोर्धर्चशः । " उपोषुशृणुहीगिर " इत्येका पङ्क्तिः । " सुसंदृशे " ति द्वे एव पङ्क्त्यास्तृचः पङ्क्तिशंस्यः । पङ्क्तिषु द्विरवस्येद्द्वयोर्द्वयोः पादयोः उत्तमेन पादेन प्रणुयात् । " यदिन्द्रपृतनाज्य " इत्यौष्णिहस्तृचोर्धर्चशः । " अयन्ते अस्तुहर्यत " इति बार्हतस्तृचोर्धर्चशः । " आधूर्ष्वस्मा " इति द्विपदाक्कृपादद्वयं पच्छः । " ब्रह्मन्वीरब्रह्मकृतिञ्जुषाण " इत्येका पच्छास्त्रिष्टुप् । " एष ब्रह्मायऋत्विय " इति द्विपदा पच्छः । " प्रतेमहेविदथेशंसिषंहरी " इति जागतस्तृचः पच्छः । " त्रिकद्रुकेषुमहिषोयवाशिर" इति तृचं पच्छः । एता द्वेधाकारं शंसेत् । एकैकामृचं द्वे द्वे कुर्यादित्यर्थः । पच्छः शंसनं तत्सपत्तम इति पच्छः इत्युक्तम् । तत्र

प्रथमा अष्टी । द्वितीयतृतीये उष्णिक्शक्वर्यौ । "प्रोष्वस्मैपुरोरथमि" ति शाक्वरस्तृचोनुष्टुप् गायत्राकारः शस्यः४ चतुर्भिः पादैः प्रथमां त्रिभिरुत्तमामित्यर्थः । तेनैतास्तिस्रः पङ्क्तिर्भवन्ति । "प्रचेतने"त्यनुष्टुबर्धर्चशस्या । "प्रगवाश्चिष्टुभमिषमर्चतप्रार्चतयोत्र्यर्ती रफाणयदि" ति तृचोनुष्टुभोर्धर्चशः । उत्तमतृचस्य द्वे शस्त्वाहूय "अस्यमदेजरितरि" त्येतां निविदं शस्त्वा "भेत्र" इत्येतां शस्त्वाहूय "उग्रदत्र्यध्नस्ये" त्यनया परिदधाति । अर्धर्चशः "उक्थंवाचीन्द्रायदेवेभ्य" इति शस्त्वा जपः । "एवाह्येवेवाहीन्द्र ३ मेवाहिशक्रोवशीहिशक्र" इति जपित्वा सम्प्रेषितः "अपाः पूर्वेषांहरिवः सुतानामि" ति यजति । उक्तोनुवषट्कारः । विहृते भक्षविधिर्वक्ष्यते ॥

अथ विहृतषोडशिनः पाठः प्रदर्श्यते । अभिहिङ्कृत्य "अध्वर्योशोंसावो ३ मिन्द्रजुपस्वप्रवहायाही" ति स्तोत्रियानुरूपौ यथासूत्रमर्धर्चशः शंसेत् । "विष्णुर्नत्वेपः ममन्तुक्रतुर्नो ३ मात्वावहन्तुहरयउपोपुश्रृणुहीगिरः वृषणंसोमपीतयेमघवन्मातथाइवो ३ मिन्द्रंत्वाद्भूयचक्षसोमदातः सूनृतानन्तः कण्आदर्थयामइ‑न्द्रोजाचिन्द्रेहरो ३ मिमाधानाघृतस्नुवः सुमंदशश्चावयं हरी इहोपवक्षतोमघवन्नान्दिपीमहो ३ मिन्द्रंसुखतमेरथमनूनंपूर्णबन्धुरः स्तुतोत्राहिवशाँअनुयोजान्विन्द्रेतहरो ३ मिन्द्रंसानहत्रामहेस्थातं वृषणंरथम इन्द्रंप्रयत्यध्वरेगोषुनिष्ठुतिगोविदो ३ मिन्द्रंसोमस्यपीतयेयः पात्रंहारियोजनं पूर्णमिन्द्राचिकेतातियोनाभिरन्तेहरो ३ प्यादिन्द्रप्रतनाज्येयन्तेअस्तुहर्यतः देवाम्वाधिरप्युरः सोम आहारिभिः सुतो ३ मादित्त्वेहग्रुपाणइन्द्रहरिभिर्नआगहि पिबारदुंयवक्षतुरातिष्ठहरितंरथो ३ प्यदाष्ट्रवंनदीष्टतंहर्यन्नुपममर्चयः शासमानंनरित्रवधीः सूर्यहर्यनरोचयो ३ मादित्त्वेहविद्वांश्चिकन्यान्हर्यश्ववन्

से यताहरीववक्षतुरिन्द्रीविश्वा अभिश्रिया ३ यदातेविष्णुरोजसा-
त्रीणिपदाविचक्रमेपृथिवीहारिवर्यसो ३ मा-
दिन्तेहाधारयद्धरितोर्भूरिभोजनं यताहरीववक्षतुर्ययोरन्तर्हरिश्वरो ३
माधूर्त्वस्मैब्रह्मन्वीरब्रह्मकृतिञ्जुषाणः दधाताश्वानर्वाचीनोहरि-
भिर्याहितूयो ३ मिन्द्रोनवज्रर्यास्मिन्नूषुसवनेमादयस्वं हिरण्यबाहु-
रूपब्रह्माणिशृणव ३ मानो इमेपब्रह्माप्रतेमहेविदथेशंसिषंहरी
यकृतिर्वयः प्रतेवन्वेवनुषोहर्यतंमदो ३ मिन्द्रोनामघृतंनयोहरिभिश्चा-
रुसेचता शुतोगि आत्वाविशन्तुहरिवर्यसङ्गिरो ३ विस्रुतयोहरि-
हियोनिमभियेसमस्वरन् यथायथोहिन्वन्तोहरीदिव्यंयथासदो ३
मिन्द्रन्त्वघार्यं पृणन्तिहरिभिर्नधेनवः निरातयइन्द्रायशूषंहरिवन्त-
मर्चता ३ त्वामिछवसो अस्यवज्रोहारितोय आपसः वसनस्पतेह-
र्निकामोहरिरागभस्त्यो ३ प्यन्तिगिरोद्युम्नीसुशिप्रोहरिमन्युसा-
यकः नमेयतइन्द्रेनिरूपाहारितामिमिक्षिरो ३ न्त्रिकद्रुकेषुमहिषोयव-
शिरन्तुविशुष्मः तृपत्सोममपिबद्विष्णुनासुतंयथावशो ३ सईम-
मादमांहकर्मकर्तवेमहामुरुं सैनंसश्चदेवोदेवंसत्यमिन्द्रंसत्यइन्द्रो ३
मधत्विषीमां अभ्योजसाक्रिविंयुधाभवत् आरोदसीअपृणदस्यम-
ज्यनाप्रवावृधो ३ मधत्तान्यअठरेप्रेमरिच्यतप्रचेतन सैनंसश्च० त्य-
इन्द्रो ३ साकजातः क्रतुनासाकमोजसाववक्षिथ साकंवृद्धोवीर्यैः
सासहिर्मृधोविचर्षणी ३ न्दातारावस्तुवतेकाम्यंवसुप्रचेतय सैनं-
सश्च० त्यइन्द्रो ३ म्प्रोष्वस्मैपुरोरथमिन्द्रायशूषमर्चत अभीकेचि-
दुलोककृत्सङ्गेसमत्सुवृत्रहा ३ मस्माकम्बोधिचोदितायाहिपिबम-
त्स्व नभन्तामन्यकेषांज्याकाअधिधन्वसो ३ त्वंसिधूंरवासृजोधरा-
चोअहन्नहिम् अशत्रुरिन्द्रजज्ञिषेविश्वम्पुष्यसिवार्यो ३ न्तन्त्वा-
परिष्वजामहेक्रतुञ्छन्दक्रुषंबृहत् नभन्तामन्य० न्त्वमो ३ विषु
विश्वाअरातयोर्यानशन्तनोधियः अस्तासिशत्रवेवधंयोन इन्द्रजि-

घांमतो ३ स्यातेरातिर्दद्धिर्वसुसुम्नआवेहिनोवसो नमन्ता० धन्वसो ३ म्पमवस्त्रिष्टुभमि" ति तृचोऽर्धर्चशः। "अर्चतप्रार्चते" ति तृचोर्द्धर्चशः। "पन्यमानम्परोगिरो ३ शोंसावो ३ मस्यमदेजरितरिन्द्रः सोमस्यमत्तात अस्यमदेजरितरिन्द्रोहिमहन अस्यमदेजरितरिन्द्रोयंवेगमैरयत अस्यमदे जरितरिन्द्रोजिन्वदजुवोपिन्वदपिनः अस्यमदेजरितरिन्द्रउदार्यवर्णमातिरदवदासीद्दिशोअस्तभ्नात अस्यमदेजरितरिन्द्रउद्यामस्तभ्नादप्रथयत्पृथिवीम अस्यमदेजरितरिन्द्रोदिविसूर्यमैरयच्छ्यन्तरिक्षमतिरत अस्यमदेजरितरिन्द्रः समुद्रम्पकुपितमरम्णात अस्यमदेजरितरिन्द्रऋश्यो इवपर्फणतः पर्वतान्प्रकुपितानरम्णात. अस्यमदेजरितरिन्द्र इहश्रवदिहसोमस्यमत्सत मेमान्दे ३ वसागमो ३. मर्भकोनकुमारक" इत्येकार्धर्चशः। "उद्यद्ब्रध्नस्य विष्टपमि"त्येतया परिदधाति अर्धर्चशः। "उ- "कथंवाचीन्द्रायदेवेभ्य" इति शस्त्वा जपः। "एवाह्येनायाः पूर्वपांहरिवः सुतानामेवाहीन्द्रा ३ अथोइदंसवनङ्केवहनन्ते एवाहिशक्रोममद्धिसोमंमधुमन्तमिन्द्रवशीहिशक्रः सत्राव्रपजठरआव्रपस्व। ३ वौ०"। उक्तोनुवषट्कारः। अत्र केचिदेवाह्येवेत्यादेर्जपशब्दवाच्यस्यांशस्योपांशुत्वमिच्छन्ति। तदयुक्तम। तथासति महानाम्न्युपसर्पणाऋकपदानां च मन्त्रत्वं स्यात। प्राणमन्त्रतिश्च युक्ता। सूत्रे मन्त्रतपाठदर्शनात। तस्मादेकस्वरत्वमेव। ननु सर्वस्या अप्युपांशुत्वं किन्न स्यादिति चेन्न। अनेकाक्षरबाधप्रसङ्गात। तस्माज्जपसहितयाज्यायां उच्चैष्ट्वमेव युक्तम। ततः आहृतं षोडशिपात्रं समुपहातुं भक्षयन्ति। यमैचयामिनो मैत्रावरुणश्चयच्छन्दोगाः। प्रथमं होता भक्षयति। स्वव्यानि[illegible]न्भक्षिण उपहूय "इन्द्रषोडशिन्नोजस्विन्नि" ति मन्त्रेण। म[illegible]मीति मन्त्रान्तः। मैत्रावरुणोप्यनेनैव भक्षयति स्वव्यानि[illegible]

क्षिण उपहूय । इतरे तु स्वशास्त्रोक्तविधिना भक्षयन्ति । अस्य प्रतिगरे विशेषः । "आस्तावहन्तुहरय" इत्यारभ्य "प्रप्रवस्त्रिष्टुभ" इत्येतत्पर्यन्तमनवानमणवयोर्यथाक्रमं "ॐ थामोदैवमदे मथामोदैवीमथ" इति प्रतिगरौ भवतः । अन्यत्समानम् । ततो मृगतीर्थसर्पणं ततोनुयाजादि । सूक्तवाकप्रैषे "अग्निमद्य० गृह्णन्नग्नय आज्यंगृह्णत्सोमायवध्नन्नग्नयइन्द्राग्निभ्यां छागौबध्नन्निन्द्रायमेषंसुन्वन्निन्द्रायसोमम्भृज्जंहरिभ्यान्धानाः सूपस्थाअद्य० भवदग्नयआज्येनसोमायाज्येनाग्नयइन्द्राग्निभ्यां छागौ बध्नन्निन्द्रायमेषंसुन्वन्निन्द्रायसोमंभृज्जंहरिभ्यान्धानाः सूपस्थाअद्य० भवदग्नयआज्येनसोमायाज्येनाग्नय इन्द्राग्निभ्यांछागाभ्यामिन्द्रायमेषेणेन्द्रायसोमेनहरिभ्यान्धाना० ग्रभीषुरवीवृधन्तपुरोडाशैरपादिन्द्रः सोममसुक्ता ब्रूहि"। ततो यज्ञपुच्छादि समानम् । संतिष्ठते षोडशिसंस्थो ज्योतिष्टोमः ॥

अथ वाजपेयस्य प्रयोग उच्यते ॥ तस्य सर्वमग्निष्टोमवत् । विशेषस्तूच्यते । केचिदग्नीषोमीयेण पशुपुरोडाशेन देवसुहविषामन्वायातनं कुर्वन्ति । तस्मिन्पक्षे तथैव प्रचरितव्यम् । अनुयाजप्रभृति हिरण्यमालिन ऋत्विजः । तत्र होतुः स्रगेवंविधा भवति । हिरण्यपीतशतपुष्करैः कृता वस्त्रकिञ्जल्का च । उपाकरणकाले आग्नेयादीन्पशूनुपाकृत्य मारुतीं गांवशामुपाकरोति । सप्तदश प्राजापत्यान् अथ सारस्वतीं मेषीं च । एवं द्वाविंशति उपाकरणं कुर्वन्ति इति केचित् । अपरे अन्यथा कुर्वन्ति । आग्नेयादीस्त्रीनुपाकृत्य मारुतीं सारस्वतीं मारस्वतं सप्तदश प्राजापत्यान् इति एवं वा क्रमः । तत्र रशनाभेदात् परिव्ययणभेदः । परिव्ययणभेदाद्युपासुनास्ति इत्यावर्तते केचित् । अपरे तु रशनापरिव्ययमाणे प्रपाणां तन्त्रमिच्छन्ति । तस्मिन्पक्षे सकृदेव अभ्यर्थ-

वशाग्निर्णयः। आवाहने आज्यभागावावाप "अग्निमावह इन्द्राग्नी आवह इन्द्रमावह मरुतआवह सरस्वतीमावह सरस्वन्तमावह प्रजापतिमावह वनस्पतिमावह इन्द्रंवसुमन्तमि" त्यादि। न एषां पशूनां पर्यग्निस्तौकौ तन्त्रम्। प्रकृतौ समर्थनिगमनात्सर्वे यथार्थमूह्याः। अध्रिगौ ऊह्यानि पदानि वक्ष्यते। "मेधपतिभ्योमेधान प्रैभ्योअग्निं रन्वेनान्माता उदीचीनानेषांपदानिधत्तात पृथिवींशरीराणि एकधैकैषांत्वचआच्छयातात पुरानाभ्याअपिशसोवपाउत्खिदतादन्तरेवोष्माणंवारयध्वात श्येनमेषांवक्षांसि शलाबाहू श्लोपाणिकश्यपेवांसाअच्छिद्राः श्रोणीः कवषोरुस्केकपर्णाष्ठीवन्तः षड्विंशतिः षड्विंशतिरेषांवङ्क्रयः० गात्रमेषानूनंकृणुतात वानिष्ठुनेषां मा रावेष्टोरूकमि"त्यादि समानम्॥

अथाग्नेर्वपाप्रचारः॥ "अग्नेनये"त्यनुवाक्या। होतायक्षदग्निच्छागस्यवपायामेदस" इति प्रैषः। "प्रवः शुक्राये" ति याज्या। अथैन्द्राग्नस्य। "आवृत्रहण होतायक्षदिन्द्राग्नीच्छागस्य वपाया" इति प्रैषः। "शुचिंनुस्तोममि" ति याज्या। अथैन्द्रस्य। "इन्द्रंनरोनेमधिता होतायक्षदिन्द्रंवृष्णेर्वपाया" इति प्रैषः। "उरुन्नोलोकमि" ति याज्या। अथ मरुताम्। "शुचीवोहव्या होतायक्षन्मरुत उस्रायावपायामेदसोजुषन्तामि" ति प्रैषः। "प्रचित्रमर्कमि" ति याज्या। अथ सरस्वत्याः। "प्रवाचिनत्सरस्वती हो० सरस्वती मेष्या वपाया" इति प्रैषः "प्रक्षोदसाधायसे" ति याज्या। अथ सरस्वतः। "जनीयन्तोन्वग्रवः होतायक्षत्सरस्वन्तं मेषस्यवपाया" इति प्रैषः। "दिव्यं सुपर्णमि" ति याज्या। अथ प्राजापत्यानां तन्त्रेण यागः। "हिरण्यगर्भः समवर्तताग्रे होतायक्षत्प्रजापतिं छागानां वपानां मेदसो जुषतामि" ति प्रैषः। "यस्येमेहिमवन्त" इति याज्या। प्र-

जापतियागस्योपांशुधर्माः । आग्नूः प्रणववषट्कारप्रैषादीनामुच्चैष्ट्वम । आददुत्तमत्करज्जुषतामघ्यदग्रभीदवावृधतेत्येषामुपांशुत्वम् । चात्वाले मार्जनादि ॥

अथाऽऽज्यशस्त्रे विशेषः । " प्रवोदेवायाग्नये " त्येतस्य स्थाने "अग्निनरोदीधितिभिरि " ति पञ्चविंशतिकं सूक्तमर्द्धर्चशः शंसेत् । प्राकृती याज्या । सर्वविकृतिषु शस्त्रयाज्याः प्राकृता एव भवन्ति धाय्याश्च । तदुक्तं ब्राह्मणे । 'मूलं वाएतद्यज्ञस्यधाय्याश्चयाज्याश्चे'त्यादि० 'तस्यैताः समान्य एव स्युरि' त्यन्तेन । प्राकृतमेव प्रउगं माधुच्छन्दसम् । अथ होत्रकाणां' मैत्रावरुणस्य । "ता नः शक्तंपार्थिवस्य तावांमम्यगदुह्वाणे" ति स्तोत्रियानुरूपौ । शेषमैकाहिकमेव ॥ अथ ब्राह्मणाच्छंसिनः । "सुरूपकृत्नुमूतयेऽयमुतेसमतसि" इति स्तोत्रियानुरूपौ । शेषमैकाहिकमेव ॥ अनुरूपः प्राकृत इति । अपरे "तावांमम्यगदुह्वाणासुरूपकृत्नुमूतये आसुतेसिञ्चतश्रियं" एते तृचाः स्तूपाणां यथासंख्यं स्तोत्रियानुरूपा इति वदन्ति । पक्षान्तरे तु मैत्रावरुणाच्छावाकयोः पूर्वोक्ताः स्तोत्रियानुरूपाः । ब्राह्मणाच्छंसिनस्तु "शुष्मिन्तमंनऊतय" इति तृचोनुरूपो भवतीति वदन्ति । पक्षद्वयेपि अनुरूपाः प्राकृता एवेति सिद्धांतिनो मतिः । माध्यन्दिने सवने दधिघर्मेण प्रचर्य एषां पशुपुरोडाशैश्चरन्ति । प्रथममग्नेः । "अग्नेत्वंपारयानव्योअस्मान्" इत्यनुवाक्या । "होतायक्षदग्निपुरोडाशस्ये" ति प्रैषः । "यथाविप्रस्ये"ति याज्या । अथैन्द्राग्नस्य । "आभरतमि" त्यनुवाक्या । "होता०दिन्द्राग्नीपुरोडाशस्ये" ति प्रैषः । "गीर्भिर्विप" इति याज्या । अथैन्द्रस्य । "यइन्द्रशुष्म" इत्यनुवाक्या । "होतायक्षदिन्द्रंपुरोडाशस्ये"ति प्रैषः । "प्रससाहिष"इति याज्या । अथ मरुताम् । "नूष्ठिर" इत्यनुवाक्या । "होतायक्षन्मरुतः पुरो०

जुषन्तामि" ति प्रैषः। "अराइवेदचरमा अहेवे" ति याज्या। अथ सरस्वत्याः। "उतस्यानः सरस्वतीजुषाणाहोता०त्सरस्वन्तंपुरोडाशस्ये" ति प्रैषः। "सवाव्रधेनर्य" इति याज्या। अथ प्राजापत्यानां तन्त्रेण यागः। "यआत्मदा" इत्यनुवाक्या। "होतायक्षत्प्रजापतिंपुरोडाशानांजुषन्तांहवि०देनसौरि" तियाज्या। "होतायक्षत्सरस्वतींपुरोडाशस्ये" ति प्रैषः। "पावीरवी" ति याज्या। अथ सरस्वतः। "येतेसरस्वऊर्मय" इत्यनुवाक्या। पुरोडाशादिमरुत्वतीयप्रगाथान्तं शस्त्वाहूय "कयाशुभासवयसः सनीडा" इति सूक्तं पञ्चदशकम्। अस्य सूक्तस्थं "सुगाअपश्चकर" इत्येवमन्तं शस्त्वाहूयं "इन्द्रोमरुत्वानि" ति निविदं शस्त्वा "एकस्यचिन्म" इत्यादिसूक्तशेषम् आहूय "अनुत्तमानेमघवन्नि" त्यनया नवम्यां परिदध्यात्। पच्छः शंसेत। नित्या याज्या। नाराशंसभक्षणानन्तरं बार्हस्पत्येष्टिः साज्यभागप्रभृति इडान्ता भवति। अत्र बृहस्पतेरादेशो न कर्तव्यः। वार्त्रघ्नावाज्यभागौ। "बृहस्पतिः प्रथमंजायमानोमहोज्योतिष" इत्यनुवाक्या। "बृहस्पतिः समजयद्वसूनिमहोव्रजानि" ति याज्या। इति प्रधानस्य। अथ स्विष्टकृतः। "त्वामीळेअजिरंदूत्याये" त्यनुवाक्या। "येऽयजामहेऽग्निसुदीतिंसुसंदृशं गृणन्त" इति याज्या। केचिदेनामिष्टिं न कुर्वन्ति॥

अथ निष्केवल्यम्॥ "अभित्वाशूरनोनुम" इत्यादि धाय्यान्तं शस्त्वाहूय "त्वामिद्धिहवामह" इति द्वृचः प्रगाथो बृहता योनिमर्धर्चे शस्त्वाहूय "पिबासुमस्ये" ति सामप्रगाथं शस्त्वाहूय "तदिदासभुवनेषुज्येष्ठमि" ति सूक्तं नवर्चं पच्छः शंसेत। पच्छः शस्त्वाहूय निविद। आहूयोत्तमया परिदध्यात्। मैत्रावरुणशस्त्रमैकाहिकमेव। अस्य शस्त्रस्यान्ते सरस्वतः पुरोडाशेन प्रचरन्ति। "येनसरस्वऊर्मय" इत्यनुवाक्या। "होता०सरस्वन्तंपुरोडा-

शस्ये" ति प्रैषः । "सवाद्दध" इति याज्या । प्रजापतेः पुरोडाशस्थाने बार्हस्पत्यं चरुं निर्वपन्त्यध्वर्यवः । "बृहस्पतिः प्रथमंजायमानः बृहस्पतिः समजयद्वसूनि" इति याज्यानुवाक्ये । "इडामग्ने होता०दग्निपुरोडाशयोरि" ति प्रैषः । "स्वदस्वहव्ये" ति याज्या । एवं केचित्कुर्वन्ति । अन्येपि विकल्पा अध्वर्युतो ज्ञातव्याः । ब्राह्मणाच्छंस्यच्छावाकशस्त्रे ऐकाहिके । अस्मिन्सवने आजिधावनादिवैशेषिकधर्मा उक्ता अध्वर्युभिः ॥

अथ तृतीयसवन आदित्यग्रहादि । पशुकाले मनोता प्रतिपशुमावर्तते । न वा आवर्तते । अथाग्नेः । "पाहिनो अग्न" इत्यनुवाक्या । "होता० दग्निश्छागस्यहविषआददद्ये" ति प्रैषः । "प्रकारव" इति याज्या । अथैन्द्राग्न्योः । "उभावामिन्द्राग्नी हो० दिन्द्राग्नीछागस्यहविषआत्ताम० घस्तान्न० करतएवेन्द्राग्नीजुषेतांहि०" प्रैषः । "प्रचर्षणिभ्य" इति याज्या । अथेन्द्रस्य । "इन्द्रोराजाजगतः होता० दिन्द्रमेषस्यहविषआददद्य० घसन्नूनं० करदेवेन्द्रोजुषतामि" ति प्रैषः । "स्वस्तयेवाजिभिश्च" ति याज्या । अथ मरुताम् । "आवोहोताजोहवी" ति अनुवाक्या । हो० न्मरुतउस्रायाहविषआदन्नद्य० घसन्नूनं० करन्नेवमरुतोजुषन्तामि" ति प्रैषः । "यावः शर्मशशमाने" ति याज्या । अथ सरस्वत्याः । "सरस्वत्यभिनोनेषी" त्यनुवाक्या । "होतायक्षत्सरस्वतींमेष्याहविषआददद्य० घसन्नू० करदेवसरस्वतीजुषतामि" ति प्रैषः । "यस्तेस्तन" इति याज्या । अथ सरस्वतः । "पीपिवांसंसरस्वत" इत्यनुवाक्या । "होता० सरस्वन्तंमेषस्यहविषआददद्य० घसन्नूनं० करदेवसरस्वान्जुषतामि" ति प्रैषः । "यस्यव्रतंपशव" इति याज्या । अथ प्रजापतेः । सप्तदशहविषां तन्त्रेण यागः । "यः प्राणतोनिमिषत" इत्यनुवाक्या ।

"होतायक्षत्० प्रजापतिंछागानां हविषआददद्य० घस्न्नूनं० क-रदेवप्रजापतिर्जुषताम" ति प्रैषः। "यंक्रन्दसी" ति याज्या। प्रजापतेरुपांशुधर्मी भवति। अथ वनस्पतियागः। "देवेभ्योवनस्पते होता०. वनस्पतिमि" त्यादि० "यत्राग्नेराज्यस्यहविषः प्रियाधामानि यत्रसोमस्याज्यस्यहवि० मानि यत्राग्नेश्छागस्यहवि० मानि यत्रेन्द्राग्न्योश्छागस्य० मानि यत्रेन्द्रस्यवृष्णोमेषस्यहवि० मानि यत्रमरुतामुस्रायाहवि० मानि यत्रसरस्वत्यामेष्याहवि० मानि यत्रसरस्वतोमेषस्यहवि० मानि यत्रप्रजापतेश्छागानांहविष० मानि यत्रवनस्पतेः प्रियापाथांसि यत्रदेवानामि" त्यादि० "तत्वेतान्मस्तुत्ये० प्रीयमइवक्रत्वीकरद्देवन्देवोवनस्पतिरि" ति प्रैषः। अथ स्विष्टकृत्प्रैषः। "होता० दग्निस्विष्टकृतमयाडग्निरग्नेराज्यस्यहविषः प्रियाधामान्ययाट्सोमस्याज्यस्यहविषः प्रियाधामान्ययाडग्नेश्छागस्यह० याडिन्द्राग्न्योश्छागस्यह० याडिन्द्रस्यवृष्णोह०याण्मरुतामुस्रायाह० याट् सरस्वत्यामेष्याह० याट् सरस्वतोमेषस्यह० याट् प्रजापतेश्छागानांहवि० याड्वनस्पतेः प्रियापाथांस्ययाड्देवानामि" त्यादि पश्विडोपह्वानादि। वैश्वदेवशस्त्रे प्रतिपदनुचरौ शस्त्वाहूय "तदेवस्ये" ति सूक्तं सप्तर्चं निविद्धानीयम्। एकां शिष्ट्वा निवित्। आहूय "प्रकयाचे" ति धाय्या। आहूय "घृतेनद्यावापृथिवीअभीवृते" ति तृचं द्यावापृथिवीयं निविद्धानीयं पच्छः। एकां शिष्ट्वा निवित्। "सुरूपकृत्नु" धाय्या। आहूय "अनश्वोजात" इत्यार्भवं निविद्धानीयं नवर्चं पच्छः। एकां शिष्ट्वा निवित्। "अयंवेन, येभ्योमाता, एवापित्र" इति तिस्रो धाय्याः। आहूय "परावतोयेदिधिषन्तआप्यमि" ति सप्तदशर्चं वैश्वदेवं निविद्धानीयं पच्छः। एकां शिष्ट्वा निवित्। आहूय "अदितिर्द्यौ"रिति परिधानीया। सर्वत्र वैश्वदेव

इति वचनात् । अथाग्निमारुतम् । "वैश्वानरायधिष्ण्यामि" ति सूक्तं पञ्चदशर्चं वैश्वदेवं निविद्धानीयं पच्छः । एकां शिष्ट्वा निवित् । "शन्नः करतसि" इति धाय्या । "धारावरामरुत" इति मारुतं पञ्चदशर्चं सूक्तं पच्छः । एकां शिष्ट्वा निवित् । आहूय "त्वंनश्चित्रऊत्याग्नेविवस्वदुषम" इति प्रगाथौ स्तोत्रियानुरूपौ ककुबुत्तराकारौ शस्त्वाहूय "यज्ञायज्ञावोअग्नये देवोवोद्रविणोदा" इति प्रगाथावर्द्धर्चशः शंसेत् । यज्ञायज्ञीयस्य त्वक्रियमाणस्यापि सानुरूपं योनिं व्याहानं शंसेदिति वचनात् । आहूय "त्वमग्नेप्रथमोअङ्गिरा" इति अष्टादशर्चं सूक्तं जातवेदसं पच्छः । एकां शिष्ट्वा निवित् । आपोहिष्ठीयादि समानम् । उक्थ्यन्तु मैत्रावरुणब्राह्मणाच्छंसिनोः प्राकृतमेव । अथाच्छावाकस्य । "गायन्तित्वागायत्रिणअत्वागिरोरथीरिवे" ति स्तोत्रियानुरूपौ । "ऋतुर्जनित्री" इत्यादि प्राकृतमेव । अथ विहृतषोडशी ॥

अथातिरिक्तोक्थम् । "प्रतत्तमद्यशिपिविष्टनामप्रतद्विष्णुस्तपतेवीर्येणे" ति स्तोत्रियानुरूपौ सूत्रकारेणोक्तौ तथापि च्छन्दोगानुसारेणोच्यते । अभिहिङ्कृत्य "किमित्तेविष्णोपरिचक्ष्यम्भूत्, प्रतत्तेअद्यशिपिविष्टनाम, वषट्ते विष्णवासआकृणोमि" एतास्तिस्रः स्तोत्रियः । "शंसावोप्रतद्विष्णुस्तपतेवीर्येणे" ति अनुरूपस्तृचः । आहूय "ब्रह्मजज्ञ-" इत्येका पच्छः । "यत्तेदिक्षुप्रराध्य" इत्येका अर्धर्चशः । "त्वामिच्छवसस्पत" इत्येका अर्धर्चशः । "तं प्रत्नथे" ति त्रयोदशकं पच्छः । अस्य द्वादशर्चः शस्त्वाहूय "हंसः शुचिषदि" त्येतां पच्छः अर्धर्चशः त्रिपद्या । चतुर्थमनवानमुक्त्वा प्रणव अवस्येत् । पुनस्त्रिपद्या अर्धर्चशः पच्छः । एवं सप्तविधं दूरोहणं शस्त्वा "सुतम्भरोयज-

ह वनस्पति० इन्द्रंवसुमन्तमि" त्यादि । केवलसारस्वतीमेषीपक्षे अध्रिगौ ऊह्यानि पदानि । मेषपत्यैमेषां प्रास्याअग्निभरत अन्वेनांमाता अस्याः पदानि० एकधास्यास्त्वचमाच्छ्यातात्पु० श्येनमस्यावक्षः षड्विंशतिरस्यावङ्क्रयः अस्याअनूनंवनिष्टुमस्यामाराविष्टे" त्यादि यथासूत्रम् । समुच्चये वाजपेयवदध्रिगुर्भवति । सरस्वतीयाज्यानुवाक्याप्रैषा वाजपेयोक्ता बोध्याः । अन्यत्पोडशिशस्त्रान्तं प्रकृतिवत्कृत्वा मृगतीर्थसर्पणं कर्तव्यम् । अविहृतविहृतषोडशिनोर्विकल्पः । संस्थितेषु सवनेषु षोडशिनि चातिरात्र इति वचनात् षोडश्यन्ते अवश्यं मृगतीर्थसर्पणं भवति । षोडश्यकरणपक्षे न भवति । ततः पर्यासंसंज्ञानि द्वादश शस्त्राणि भवन्ति । तत्राद्यानि चत्वारि शस्त्राणि प्रथमः पर्यायः । मध्यमानि चत्वारि मध्यमः पर्यायः । उत्तमानि चत्वारि उत्तमः पर्यायः । त्रिष्वपि पर्यायेषु होतुराद्यं शस्त्रं भवति । उत्तराणि त्रीणि यथाक्रमं होत्रकाणां भवन्ति । तानि चतुराहावानि भवन्ति । " उक्थंवाचि " इति शस्त्वा जपः सर्वेषाम् । अथ शंसनप्रकारो निर्दिश्यते । प्रथमे पर्याये होतुराद्यां वर्जयित्वा प्रत्यृचं स्तोत्रियानुरूपेषु प्रथमानि पदानि द्विरुक्त्वावस्यन्ति । शिष्टं तमसित्वा प्रणुवन्ति सर्वे सर्वासाम् । मध्यमे पर्याये मध्यमानि पदानि प्रत्यादायं द्विरुक्त्वा ऋगन्तैः प्रणुवन्ति । उत्तमे पर्याये उत्तमानि पदानि द्विरुक्त्वा प्रणुयात् । अछावाक उत्तमे पर्याये उत्तमपादस्यान्त्यचतुरक्षरं द्विरुक्त्वा प्रणुयात् इति विशेषः ॥

अथाद्यं होतुःशस्त्रम् ॥ "हंभूर्भुवस्वरों ३ शोंसावों ३ यान्तमावोअन्धसं इन्द्रमभिप्रगायत विश्वासाहंशतक्रतुमंहिष्ठञ्चर्षणीनों" ३ त्रिः । "पुरुहूतंपुरुष्टुतंपुरुहूतंपुरुष्टुतं गाथान्यंसनश्रुतामिन्द्रइतिब्रवीतनो ३ मिन्द्रइन्नोमहानामिन्द्रइन्नोमहानां दातावाजानांनृतुर्म-

हांअभित्वायमो ३ शोंसावोमपादुशिप्रन्धसोपादुशिप्पन्धसः सुदक्ष-स्यप्रहोपिणइन्दुरिन्द्रोयवाशिरोतस्याभिप्रार्चते" ति पूर्ववदनुरूपोऽभ्यासः । "शोंसावोन्त्यमुवः मवासाहामि" ति सूक्तशेषः सप्तविंशत्यर्धर्चोऽर्धर्चशः "अभित्यंमेषमि"ति सूक्तं पञ्चदशर्चं पच्छः । आहूय अस्योत्तमा परिधानीया ॥ "अभ्वर्गवोभरद्वानेन्द्रायसोममि" ति याज्या । उक्तोनुवषट्कारः । सर्वेषां मैत्रावरुणवद्भक्षविधिः ॥ अथ मैत्रावरुणस्य ॥ हिंभूर्भुवस्वरोंशोंसावो प्रवइन्द्रायमादनं प्रवइन्द्रायमादनं हर्यश्वायगायतसखायः सोमपान्नो" ३ त्रिः । "शंसेदुक्थंसुदानवे शंसेदुक्थंसुदानव उतद्युक्षंयथानरश्चकृमासत्यराधसो ३ त्वंनइन्द्रवाजयुस्त्वइन्द्रवाजयुः त्वंगव्युः शतक्रतो त्वंहिरण्ययुर्वसो ३ शोंसावोप्रकृतान्यृजीपिणः प्रकृतान्यृजीपिणः कण्वाइन्द्रस्यगाथयामदेसोमस्य वोचतो ३ यस्त्राविन्दमनर्शनिं यः स्त्राविन्दमनर्शनिं पिप्रुंदासमहीशुवन्धीदुग्रोरणन्तपो ३ न्यर्बुदस्यविष्टपं न्यर्बुदस्यविष्टपं वर्ष्माणंबृहतस्तिरकृपेतादिन्द्रपौंस्योंशोंसावोप्रतिश्रुतापवोधृषद्" ति पञ्चदशर्चं सूक्तमर्धर्चशः । "दिवश्चिदस्य" ति अष्टर्चं पच्छः । "मनोनव्येभिरि" त्येका पच्छः । एषैव परिधानीया । "अस्यमदेपुरुवर्पांसिविद्वानि" ति याज्या । उक्तोनुवषट्कारः ॥ मैत्रावरुणवद्भक्षविधिः ॥ अथ ब्राह्मणाच्छंसिनः ॥ "हिंभूर्भुवस्वरोंशोंसावो ३ वयमुत्वातदिदर्था वयमुत्वातादिदर्थाः इन्द्रत्वायन्तः सखायः कण्वाउक्थेभिर्जरन्तो ३ मिच्छन्तिदेवाः सुन्वन्तमिच्छन्तिदेवाः सुन्वन्तं स्वप्नाय स्पृहयन्तियन्तिप्रमादमतन्द्रो ३ शोंसावो ३ वयमिन्द्रत्वायवो ऽभिप्रणोनुमोवृषन् ... इन्द्रत्वायवः अभिप्रणोनुमोवृपन्विद्धीत्वस्यनोवसो ३ मानोनिदे चवक्तवे अर्योरन्धीरराव्णोत्वेअपिक्रतुर्मनोन्त्वंवर्माप्रथस्त्वं ... प्रथस्त्वं नोसिमप्रथः पुरोयोधश्चवृत्रहंत्वयाप्रतिब्रुवेयुजों ३ ... वार्त्रहत्याय" ति दशर्चोऽर्धर्चशः । उत्तमामुद्धरेत् । "इन्द्रो मद्गमह-

द्रुभयमयि" इति तिस्रोऽर्धर्चशः । "न्यूषुवाचमि" ति एकादशर्चं सूक्तं पच्छः । अस्यान्त्या परिधानीया । "अप्सुधूतस्यहरिवः पिबेहे" ति याज्या । उक्तोनुवषट्कारः । मैत्रावरुणवद्भक्षः ॥ अथाऽच्छावाकस्य ॥ "हिंभूर्भुवस्वरोंशोंसावोमिन्द्रायमद्रनेसुतमिन्द्रायमद्रनसुतं प्रतिष्टोभन्तिनोगिरोमर्कमर्चन्तिकारवों" त्रिः । "यस्मिन्विश्वा अधिश्रियोयस्मिन्विश्वा अधिश्रियः रणन्ति सप्तभिरययइन्द्रंसुतेहवामहों ३ त्रिकद्रुकेषुचेतनंत्रिकद्रुकेषुचेतनं देवासोयज्ञमत्नतमिद्वर्धन्तुनोगिरों ३ शोंसावोमिन्द्रमिद्गाथिनोबृहदिन्द्रमिद्गाथिनोबृहत इन्द्रमर्केभिरर्किणइन्द्रंवाणीरनूषतोमिन्द्रइद्धर्योः सचइन्द्रइद्धर्योः सच संमिश्लआवचोयुजइन्द्रोवज्रीहिरण्ययोमिन्द्रोदीर्घायचक्षसंइन्द्रोदीर्घायचक्षसं आसूर्यंरोहयद्दिविविगोभिरद्रिमैरयों शोंसावोमेन्द्रवाजेषुनोअवयेमि" ति दशर्चं सूक्तमर्धर्चशः । "एतोन्विन्द्रंस्तवामेशानमे" ति तिस्रोऽर्धर्चशः । "मानोअस्मिन्मघवन्नि" ति सूक्तमेकादशर्चं पच्छः । अस्योत्तमया परिधानीय । "इन्द्रापिबतुभ्यं सुतोमदाये" ति याज्या । उक्तोनुवषट्कारः । मैत्रावरुणवद्भक्षः ॥ इति प्रथमः पर्यायः ॥

अथ द्वितीयः ॥ तत्र होतुः प्रथमम ॥ "हिंभूर्भुवस्वरोंशोंसावोमयन्तइन्द्र सोमोनिपूतोअधिबर्हिषि निपूतोअधिबर्हिष्येहीमस्यद्रवापिबों ३" त्रिः । "शाचिगोशाचिपूजनायंरणायतेसुतः अयंरणायतेसुतआखण्डलप्रहूयसों ३ यस्तेशृङ्गवृषोनपात्प्रणपात्कुण्डपाय्य न्यस्मिन्दध्रआमनोशोंसावोमयन्नेमःसुवजनेसोमपूरूषुसूयतेसोमः पूरूषु सूयते तस्येहिप्रद्रवापिबों ३ अयन्तेशर्यणावतिसुषोमायामधिप्रियः सुषोमायामधिप्रिय आजकीयेपविन्तमों ३ त्तमद्यराधसेमहेचारुंमदायघृष्वये चारुंमदायघृष्वयएहीमिन्द्रद्रवापिबों ३ शोंमुद्रेदभी" ति चतुस्त्रिंशत्रं सूक्तमर्धर्चशः । अस्य सूक्तस्य उत्तमामुद्धरेत् । "अ-

हम्भुवमि" ति सूक्तमेकादशर्चं पच्छः। अस्योत्तमया परिधानीय। "अपाय्यस्यायसोमदाये".ति याज्या। उक्तोनुवषट्कारो मैत्रावरुणवद्भक्षः॥ अथ मैत्रावरुणस्य॥ "हिंभूर्भुवस्वरोंशोंमावों ३ म्रातूनइन्द्रक्षुमन्तंचित्रंग्राभंसंगृभाय चित्रंग्राभंसंगृभायमहाहस्तीदक्षीणेनों" त्रिः। "विद्माहित्वातुविकूर्मितुविदेष्णंतुवीमघं तुविदेष्णंतुविमात्रमवोभों ३ नहिन्त्वाशूरदेवानमर्तासोदित्सन्तं नमर्तासोदित्सन्तंभमिंनगांवारयन्तों शोंसावोंमामद्रवपरावतोर्वन्वत्रश्च वृत्रहन् अर्वावतश्चवृत्रहन्मध्वः प्रतिपभर्पणों ३ तीव्राः सोमास आगाहिसुतासोमादयिष्णवः सुतासोमादयिष्णवपिबादधृग्यथोचिषोमिपामन्दस्वादुनरंवराधमन्यवे अरंवरायमन्यवेभुक्तइन्द्रशंहृदों ३ शोंसावोंनह्यन्यंवलाकरामि" न्यर्णावर्धर्चशः। "ईरवयंन्तीमि" ति सूक्तं पञ्चर्चमर्धर्चशः। "अहंदांगृणत" इति सूक्तमेकादशर्चं पच्छः। "शिरोंशोंमा० मवादे"० अस्योत्तमा परिधानीया। "पातासुतमिन्द्रोंअस्तुसोमंहन्तावृत्रमि" ति याज्या। उक्तोनुवषट्कारो भक्षश्च॥ अथ ब्राह्मणाच्छंसिनः॥ "हिंभूर्भुवस्वरोंशोंसावो ३ मभित्वावृषभासुतेसुतंसृजामिपीतये सुतंसृजामिपीतये तृंपाव्यश्नुहीमदों ३" त्रिः। "मात्वामूराअविष्यवोमोपहस्वानआदभन् मोपहस्वानआदभन्माकींब्रह्मद्विषोवनोमिहत्वागांपरीणसाम हेमन्दन्तुराधसे महेमन्दन्तुराधसेसरोगौरोयथापिबोंशोंसावोमाभिपगोपतिंगिरेन्द्रमर्चयथाविदे इन्द्रमर्चयथाविदसूनुंसत्यस्यसत्पतों ३ माहरयः ससृत्रिरेरुषीरधिबर्हिषि अरुषीरधिबर्हिष्यत्राभिसंनवामहो ३ मिन्द्रायगावआशिरन्दुदुह्रेवज्रिणेमधु दुदुह्रेवज्रिणेमधुयत्सीमुपह्वरेविदोंशोंसावोमातूनइन्द्रमद्यगि" ति सूक्तं नवर्चं अर्धर्चशस्ये। "अश्वावतिप्रथमामि" ति सूक्तं षडृचं पच्छः। अस्योत्तमा परिधानीया। "प्रोग्रांपीतिंवृष्ण इयर्मिसत्यामि" ति या-

ज्या । उक्तोनुवषट्कारो भक्षश्च ॥ अथाच्छावाकस्य ॥ "हिंभूर्भुवस्वरोंशोंसावो ३ मिदंत्वमोसुतमन्धः पिबासुपूर्णमुदरं पिबासुपूर्णमुदरमनभायिन्नरिमातो" त्रिः । "नृभिर्धूतः सुतोअश्नैरव्योवारैः परिपूतः अव्योवारैः परिपूतोश्वोननिक्तोनदोषों ३ तन्तेयवंयथागोभिः स्वादुमकर्मश्रीणन्तः स्वादुमकर्मश्रीणन्तइन्द्रत्वास्मिन्त्सधमादों ३ शोंसावोमिन्द्रेहिमत्स्यन्धसोविश्वेभिः सोमपर्वभिः विश्वेभिः सोमपर्वभिर्महाँ अभिष्टिरोजसो ३ मेमेनं सृजतासुतेमन्दिमिन्द्रायमन्दिने मन्दिमिन्द्रायमन्दिनेचक्रिविश्वानिचक्र्योंमत्स्वासुशिप्रहरिदभिस्तोमेभिर्विश्वचर्षणे स्तोमेभिर्विश्वचर्षणेसचैषुसवनेष्वों ३ शोंसावोमनम्राजमि" ति सूक्तं द्वादशर्चमर्धर्चशः । "उपक्रमस्वाभरते" ति तिस्रोऽर्धर्चशः । "तदस्मैनव्यमि" ति सूक्तं नवर्चं पच्छः । अस्योत्तमया परिधानीय । "अस्यापिबयस्यजज्ञान इन्द्रे" ति याज्या । उक्तोनुवषट्कारो भक्षश्च ॥

अथ तृतीयः पर्यायः ॥ तत्र होतुराद्यं शस्त्रम ॥ "हिंभूर्भुवस्वरों ३ शोंसावो ३ मिदंह्यन्वोजसासुतं राधानांपते: पिबात्वस्यगिर्वणः पिबात्वस्यगिर्वणों" त्रिः । "यस्तेअनुस्वधाममत्सुतेनियच्छतन्वं सत्वाममत्तुसोम्यं सत्वाममत्तुसोम्यों ३ प्रतेअश्नोतुकुक्ष्योः प्रेन्द्रब्रह्मणाशिरः प्रबाहूशूरराधसे प्रबाहूशूरराधसोंशोसावोंमहाँइन्द्रो यओजसापर्जन्योवृष्टिमाँइव स्तोमैर्वत्सस्यवावृधेस्तोमैर्वत्सस्यवावृधों ३ प्रजामृतस्यपिप्रतः प्रयद्भरन्ति वन्हयः विप्राऋतस्यवाहसविप्राऋतस्यवाहसोंकण्वाइन्द्रंयदक्रतस्तोमैर्यज्ञस्यसाधनं जामिब्रुवत आयुधं जामिब्रुवतआयुधो शोंसावोंसमस्यमन्यवेविश" इति द्विचत्वारिंशदृचोऽर्धर्चशः । "विश्वजिते धनजिते" इति षडृचं पच्छः । अस्योत्तमया परिधानीया । "तिष्ठाहरीरथआयुज्यमाने" ति याज्या । उक्तोनुवषट्कारो भक्षश्च ॥ अथ मैत्रावरुणस्य ॥ "हिंभू-

भुवस्वरोंशोंसावो३मात्वेतानिषीदतेन्द्रमभिप्रगायत सखायस्तोम-
वाहसः सखायस्तोमवाहसों" त्रिः। "पुरूतमंपुरूणामीशानंवार्या-
णां इन्द्रंसोमेसचासुतइन्द्रंसोमेसचासुतोंसघानोयोगआभुवत्सरायि-
सपुरंध्यांगमद्वाजेभिरासनोंगमद्वाजेभिरासनोंशों सावो३वात्वशत्र-
वागहिन्युक्थानिचहूयसे उपमेरोचनेदिवउपमेरोचनेदिवों३तुभ्या-
यमद्रिभिः सुतो गोभिश्रीतोमदायकं प्रसोमइन्द्रहूयसेप्रसोमइन्द्रहूय-
तो३मिन्द्रशुभिसुमेहत्वमस्मेसुतस्यगोमतः विपीतितृप्तिमश्नुहिविपीति-
तृप्तिमश्नुहोंशोंसावोंनकिश्चिद्रत्वदुत्तर" इति चतुर्विंशत्यृचं सूक्त-
मर्धर्चशः। अस्योत्तमामुद्धरेत्। "श्रत्तदधामी" ति पञ्चर्चं सू-
क्तं पच्छः। अस्योत्तमा परिधानीया। "इदंत्यत्पात्रमिन्द्रपान-
मि" ति याज्या। उक्तोनुवषट्कारो भक्षश्च। अथ ब्राह्मणाच्छं-
सिनः। "हिंभूर्भुवस्वरोंशोंसावों३ योगेयोगेतवस्तरंवाजेवाजहवामहे स-
खायइन्द्रमूतयेसखायइन्द्रमूतयों" त्रिः। "माघागमद्यदिश्रवत्स-
हस्त्रिणीभिरूतिभिः वाजेभिरुपनोहववाजेभिरुपनोहवो३मनुप्रत्नस्यौ-
कसो हुवेतुविप्रतिं नरोयन्तेपूर्वंपिताहुवेयन्तेपूर्वंपिताहुवोंशोंसावोयुंज-
न्तिब्रध्नमरुषंचरन्तपरितस्थुषः रोचन्तेरोचनादिवरोचन्तेरोचनादिवों
युञ्जन्त्यस्यकाम्याहरीविपक्षसारथे शोणाधृष्णूनृवाहसाशोणाधृष्णू
नृवाहसा३केतुंकृण्वन्नकेतवेपेशोमर्याअपेशसे समुषद्भिरजायथाः समु-
षद्भिरजायथों३शोंसावोयदिन्द्राहंयथात्वमि"ति सूक्तं पञ्चदश र्चमर्ध-
र्चशः। "प्रवेमहेविदथेशंसिषंहरी" इति त्रयोदशर्चं सूक्तं पच्छः।
आहूय अस्योत्तमा परिधानीया। "ऊतीशचीवस्तवर्वीर्येण" ति
याज्या। उक्तोनुवषट्कारो भक्षश्च॥ अथाच्छावाकस्य॥ "हिंभूर्भु-
वस्वरोंशोंसावो३मिन्द्रः मुतेषुसोमेषुक्रतुंपुनीतउक्थ्यंविदेवृधस्यदक्ष-
सोमहानहिषोमहान्हिषों" त्रिः। "समथमेव्योमानंदेवानांसदनंवृ-
धः सुपारः सुश्रवस्तमः समप्सुजित्समप्सुजोंतमह्वेवाजसातयइन्द्रंभरा-

यशुष्मिणंभवान सुम्नेअन्तमः ' सखा त्वंधोंशोंसात्रों ३ यइन्द्रसोमपात-मोमदः शविष्ठचेतति येनाहंसिन्पात्रिणंतमीमहेतमीमहों ३ येनदशा-वमधिगुंवेपयन्तंस्वर्णरं येनासमुद्रमाविथातमीमहेतमीमहों ३ येनसिन्धु-महीरपोरथांइवप्रचोदयः पन्थामृतस्ययातवेतमीमहेतमीमहों ३ शोंसा-वोमग्नायेअग्निमिन्धत" इति सप्तदशर्चोर्धर्चशः । "यइन्द्रचमसेष्वा-सोमश्चे"ति तिस्रोर्धर्चशः । "प्रवः सतांज्येष्ठतमाये" ति नवर्चं सू-क्तं पञ्चः । आहूय अस्योत्तमा परिधानीया । "प्रोद्रोणेहरयः कर्मा-ग्मन्नि"ति याज्या । उक्तोनुवषट्कारो भक्षश्च । औष्णिहस्तोत्रिया-नुरूपयोः प्रत्यृचमन्त्यचतुरक्षराभ्यासः कर्तव्यः । 'उत्तमे चतुरक्ष-राणि त्वच्छावाक' इति सूत्रात् । यदा गायत्रौ स्तोत्रियानुरूपौ चेत् तदा उत्तमपदाभ्यास एवेति वृत्तिकारः । प्रसंगादहीनातिरात्रे । "पन्यंपन्यमित्सोतारः पन्यइदुपगायत" इति प्रथमप-र्यायस्य स्तोत्रियानुरूपौ । तयोः प्रथमपादाभ्यासः । प्रथमपर्या-यत्वात् । "आत्वाविशन्त्विन्दवः आत्वाविशन्त्वाशवः" इति उत्तमे पर्याये स्तोत्रियानुरूपौ । तयोरुत्तमपादस्य संपूर्णस्याभ्यासः गा-यत्रीत्वात् । इति अच्छावाकस्य विशेषः । यदि छन्दोगानुसारे-ण स्तोमाभिवृद्धिस्तदा आवापे कर्तव्ये गायत्राणामेव आवापः कर्तव्यः । पर्यासवर्जं गायत्राः इति वचनात् । आवापे चतुर्होतृ-काणां सर्वेषां भवति । अथ समाप्तेषु पर्यायेषु होता आश्विनं श-स्त्रं शंसिष्यन्निसंस्थितसंचरेण निष्क्रम्याग्नीध्रीये दक्षिणं जान्वा-च्य स्थाल्या स्रुवेणावदाय षडाहुतीर्जुहोति । "अग्निरज्वी"ति प्रथमा-म् । "उषा अज्वी" ति द्वितीयाम् । "अश्विनायज्वी" ति तृतीया-म् । "वृणमांअसी"ति चतुर्थीम् । "बट्सूर्यश्रवसे"ति पञ्चमीम् । "इन्द्रंवोविश्वतस्परी" तिषष्ठीम् । अत्र आद्यानां त्रयाणां लिङ्गो-क्ता देवताः । चतुर्थपञ्चम्योः सूर्यः । अन्त्ये इन्द्रः । शिष्टमाज्यशेषं त-

त्रैव प्राश्यं आचमनमकृत्वैव हस्तस्थाज्यलेपानप्रक्षाल्य अचिम्य सदः प्रविश्य पश्चात्स्वस्य धिष्ण्यस्य तृणान्निरस्याप उपस्पृश्य समग्नजंघोरुरत्निभ्यां जानुभ्यां चोपस्थं कृत्वोपविशेत्। उत्पतिष्यच्छकुनिरिव उपविष्टः सन् आश्विनं शस्त्रं शंसेत्।

अथाश्विनशस्त्रम्॥ "हिंभूर्भुवस्स्वर्गेशोंसावो३मग्निर्होतागृहपतिः सराजे" ति प्रतिपद् पच्छः। यजतामृचोवता त्रिः "उपप्रयन्तोअध्वरं १.४. अग्नेयक्षिस्वन्दमोमयानो अग्नऊतिभिः ८, होतागृणीतउक्थोमग्निमीडेपुरोहितं ०., प्रचस्वानस्वस्त्यायोमग्निन्दूतंवृणीमहे ०१.२. इमंस्तोमसंजुषस्वनोवामिध्वा हिमियध्य २२, उक्थैरग्निर्बृहद्भानोत्वमग्नेत्रयाअभिणवाजे शुचिव्रताधमोत्वज्ञोअग्नेमहोभिः १., सखेवमोजोस्तुभ्योभिर्विप्रस्यये ६३., प्रणआयुर्वसोतिरोयुक्ष्वाहिदेवहूतमां १६., अधानेसुम्नमीमहे प्रेष्ठंवोअतिथिं ०., अग्नेसुवीरराधमोत्वमग्नेवृहद्वय १.८., हव्यवाहंनिपेदिरेमर्चन्तस्त्वाहवामहे १२, स्वाधीभिर्वचस्युभोमग्नेपावकरोचिषा ०., देवासः सर्वयानिशोदूतंवोनिश्ववेदसं ३१., येनरक्षसिदाशुषोमग्निर्होतानोअध्वरे ३, दधद्रत्नानिदाशुषोमग्निर्होतापुरोहितं०.त्वदग्नामराग्निरीमग्नइडासमिध्यसे ४, शिशीहिनः सूनुमतोमग्नेवाजाअभिद्यवो १०., अग्नेदीयतंबृहोसुपसघ्नायमीळुष १०., दिवनक्तमद्भ्योग्निमग्नेयज्ञानां ४०., शोचाविभावजरोमग्नेअग्निमत्रिणं ०., यजिष्ठमानुषेजनोमग्निर्हिवत्रनोधिय०९.. दोषावस्तर्भ्रेत्रयोदधेमग्नयेवाचमीरय ८, ताभिर्नोयज्ञमिन्वतोमिनामअग्नेसमिधं १०., विश्वाअग्निमग्नेयोदधेमित्यदर्शतसुरिहः ०., बर्हिरासादयात्रमोत्वांहिक्षेतवद्यशः १.८., जुषस्वहव्यमङ्गिरोमग्नायोमर्त्यो ०., रयिर्वाजंवात्रतोहोतानिराचेतनः ०., यज्ञंचक्रमावर्योमवेदेवायाग्नये ७, वर्षिष्ठमनुपक्षितोमग्नेकदानकामपक् ०., सुतंदूकाचिदर्थिनोमस्वायः नेः नम्यंच १०., त्वामग्नेहविष्मन्त

१४, उतेभिपृत्सुनोवृधोबृहद्वयोहिभानवे १५, नृवदमृतनृणांयम-
ग्नेवाजसातम १६, द्युमत्पावकदीदिहोमच्छावोअग्निमवसे १, प-
र्यन्नावेवसुक्रतोमबोध्यग्निः समिधाजनानां ३६ ( पच्छः ) नरीष-
तेवात्तधानः परादोमगन्ममहानममायविष्ठं ३, ( पच्छः ) यूयंया-
तस्वस्तिभिःसदानो मेनावोअग्निनममो १२, ( आद्यं प्रगाथं क-
कुबुत्तराकारं शंसेत् ) अग्निर्जनायदाशुषोमित्रोयहंपुरूणांविशांदे-
वपती २०, विश्वंममात्रणंदहोमग्नेविवस्वदुषमो १४, अश्विभ्या-
मुषमासजोसखायस्त्वाववृमहे १, आदिद्धोतारन्यसादयन्तोमयम-
ग्निः सुवीर्यस्य ६, संरायाभूः तुविद्युम्नयशस्वतोमग्नआयाह्यग्निभिः
२०, अग्नेनेधरक्षास्विनोमच्छानः शीरशोचिषं ६, भुवस्तुर्क्षपुणोम-
दर्शिगातुवित्तमो ७, पर्पिरधोमग्नातोमग्नेवाजस्यगोमतः ३, सति-
ग्मजम्भरक्षसोदहप्रतोपुरत्वादाश्वान्वोचे ३, प्रपेत्तेअग्नेवनुषस्यामो-
त्वामग्नेमनीषिणः १, हव्यवाहममर्त्यमहोवृधोमीनिष्वाहिमति ३०,
ऋतावानासंभ्राजापूतदक्षमोजनस्यगोपाअजनिष्ट ६, ( पच्छः )
त्वामाहुः सहसस्पुत्रमाङ्गिरं त्वामग्नऋतायवः समीधिरे ७, ( पच्छः )
अभिप्रयांसिपार्थिवाविनिष्टमोमग्नितमन्येयोवसु १०, ( पङ्क्तिशं-
सनम ) इयंस्तोतृभ्यआभरोप्रतिष्यामुनरी ७, उपः शुक्रेणशोचिषा-
कम्नउपः कथ ३, अस्मैरयिंनिधारयोमुपोभद्रेभिरागहि ४, गीर्भिः
कण्वाअहूषतोमिदंश्रेष्ठंज्योतिषा २०, ( पच्छः ) अदितिर्मीधुपृ-
थिवीउतद्योपृथूरथोदक्षिणायाः २६, महीस्विणंचशातिनंचवाजोम-
त्यंचीरुशदस्याः ८, ( पच्छः ) सूर्यस्यचेतिरश्मिभिर्दशानोद्युत-
द्यामनं ६, ( पच्छः ) युवतिभिः पूर्वथाकोमुपोवाजनवाजि-
नि ७, विदधेपुरुत्रोमिदमुत्यत्पुरुतमंपुरस्तात् ११ ( पच्छः )
भत्तांपृथिवीचदेवोमुदुश्रियउपमो १२, ( पच्छः ) धेहि-
श्रवोनान्युषाअवोदिविजाऋतेन ३४, ( पच्छः ) स्वस्तिभिः स-

नोमश्विनामनिरिस्मदा ३, उपप्रुधोवहंतुमोमपीतयोमश्विनावेहगच्छ-तं ३, हंमाविव पततमासुतांउपोयुवोरुषूरथंहवे १.५, विषुदुहेवयज्ञ-मृहग्गुरिगरामबोधयन्निर्भिउदेति ६, ( पच्छः ) मनसाददाशोमेष-स्यभानुः ७ ( पच्छः ) हविष्मन्तंतरणिभोजमच्छोमावांरथंपुरुमा-यंमनोजुव १०,(पच्छः)चक्रन्त्यमिन्द्रा वेवचर्षणीसहोमभूदिदं८(पच्छः) जीगृम्नोयोवांपरिज्मासुवृद ६१.(पच्छः) अतआयातंमधुपेयमश्वि-नोत्रिभिन्तोअद्यामव १३. वृधेचनोभवन्तंवाजसातौमडिद्यावापृ-थिवी २५. ( पच्छः ) उतद्योमतिमियतमं ९, ( पंक्तिशंसनम ईहेद्यावीयमावर्तयेदासूर्योदयात उदिते सूर्ये सौर्याणि प्रति-पद्यते ) माध्वीममश्रुतंहवोंसूर्योनोदिवस्पातु ५, विपश्येमनृ-चक्षसोसुदुत्यंजातवेदसं ९, ताभिर्यासिस्वयुक्तिस्वयुक्तिभोचि-त्रंदेवानां ६. ( पच्छः ) पृथिवीउतद्योंनमोमित्रस्य १२, ( प-च्छः ) नकिमन्तदेवोवमवोनिधनोमिन्द्रक्रतुंनआभर २, अतिशू-रतगामसोमभित्वाशूरनोनुमो २, गव्यन्तस्त्वाहवामहेवहत्रः सू-रचक्षमः २, क्षंराजानआंशतोमहीद्यौः पृथिवीचन १, भरीम-भान्नोहद्यावापृथिवी ( पच्छः )। " धर्मणामृथशुचोविश्वदेवी-मृचयस्य" त्येका द्विपदा पच्छः। " नयारोपातिनग्रमोशोंसावों-बृहस्पते अतियदर्या अर्हादि " ति परिधानीया पच्छः। " अ-नमुद्रवितणन्भोहान्नत्रो " त्रिः। " उक्थंवाचि " इति शस्त्वा ..न्न। अत्राश्विनग्रहान्ते तिरोअन्ह्यसञ्ज्ञकः पुरोडाशः। तस्य " इमेसोमामांस्तिरोअन्हाम " इति कल्पजा अनुवाक्या। " हो-ताणश्वनाश्विनाग्मेमानान्तिरोअन्ह्यानान्सिवीतिर्यातन्त्रिरिहमादयेथा-मुनोतुरीयंनामन्याताजिनायंवेतु सजूरग्नेराहिदश्वाघृतस्नुः स-मजूः पाअरणीभिः सजूः सूर्यपतशेनमजोपावश्विनादंसोभिः क-त्नव्व श्विनाजुषं सांमदेनांवीनांपिबतांसोमंहोतर्यजे " ति प्रैषः।

"प्रवामन्थांसिमद्यांसिमत्र्यन्यस्युरुम्मादिवतमश्विने" ति याज्ये। अध्यर्द्धमनवानमुक्त्वावसाय अर्धर्चेन वषट् कुर्यात्। यदि नैरोअन्धस्य पुरोडाशस्य स्विष्टकृदाचरेयुः तदा "पुरोडांअग्नेपचतोअग्नेष्वानआहुतिमि" ति तयाज्ये। अत्रादेशो न कर्तव्यः। पर्यायवद्भक्षः॥ समाप्तमाश्विनम्॥ ततो मृगतार्थसर्पणम्। ततोनुयाजादि। सूक्तवाकएवैष विशेषः। "अग्निमद्यहो० गृह्णन्नश्वआश्यं गृह्णंत्सोमायाज्यंवध्नन्नग्नयइन्द्राग्निभ्यांच्छागौबध्नन्निन्द्रायसरस्वत्येमेषौसुन्वन्निन्द्रायसोमंभृज्ज० नग्नयआज्येनसोमायाज्येनग्नसोमपा० यइन्द्राग्निभ्यांच्छागाभ्यामिन्द्रायसरस्वत्यमेषाभ्यामिन्द्रायसोमेनहरिभ्यामि" त्यादि० "रक्षस्तान्मदस्तः० ग्रभीषुरवीवृधन्तपुरोडाशैरि" त्यादि॥ ततो यज्ञपुच्छादि समानम्॥ समाप्तोऽतिरात्रः॥

अथ प्रायश्चित्तानि॥ यदि पर्यायानभिव्युच्छेत्सर्वेभ्यः एकं सम्भरेयुः। यदि पर्यायेष्वनारब्धेषु रात्रिर्गच्छति तदा सर्वेभ्यः पर्यायेभ्य एकं पर्यायं सम्भृत्य कुर्यात्। तद्यथा प्रथमाद्धोता स्वीयं शस्त्रमाददीत द्वितीयपर्यायान्मैत्रावरुणब्राह्मणाच्छंसिनौ द्वे शस्त्रे आददीयाताम्। उत्तमपर्यायादच्छावाकः स्वं शस्त्रमाददीत। द्वौ पर्यायौ अभिव्युष्टौ तदा अवशिष्टयोः पर्याययोर्मध्ये होतृमैत्रावरुणौ प्रथमाद्द्वे शस्त्रे स्वे आददीयाताम्। अवशिष्टयोर्मध्ये उत्तमपर्यायाद्ब्राह्मणाच्छंस्यच्छावाकौ द्वे स्वे शस्त्रे आददीयाताम्। अवशिष्टापेक्षेणैव प्रथममुत्तमं च बोध्यम्॥ [illegible] एवैकस्मिन् अपि वा सर्वे स्युस्तोमनिर्ह्रस्वाः ऊर्ध्वं स्तोत्रियानुरूपेभ्यः प्रथमोत्तमांस्तृचांच्छिंसेयुः। होतृवर्जमित्येके। [illegible] पर्यायेषु स्तोमनिर्ह्रासपक्षे होतृशस्त्रमविकृतं भवति। इति च्छन्दोगानुरोधेन विकल्पः॥

अथ शस्त्राणि ॥ त्रिष्वपि पर्यायेषु होतुः शस्त्रमविकृतं भवति । स्तोत्रियानुरूपाभ्यासादि सर्वेषां पूर्ववत् भवति । प्रथमपर्याये प्रथमपदाभ्यासः ॥ मैत्रावरुणस्य ॥ अभिहिङ्कृत्याहूय "प्रवइन्द्रायमादनं प्रकृतान्यृजीषिण" इति स्तोत्रियानुरूपौ पूर्ववच्छस्त्वाहूय "प्रतिश्रुतायवोधृषदि" ति तिस्रः । "दानायमनः सोमपावन्नि" ति तिस्रः पच्छः । अन्त्या परिधानीया । याज्या पूर्ववत् ॥ ब्राह्मणाच्छंसिनः ॥ "वयमुत्वातदिदर्थावयमिन्द्रत्वायवोभी" ति स्तोत्रियानुरूपौ पूर्ववच्छस्त्वाहूय "वार्त्रहत्याये" ति तृचोऽर्धर्चशः । "त्वमेतानि" ति तृचं पच्छः । अन्त्या परिधानीया । याज्या पूर्ववत् ॥ अथाच्छावाकस्य ॥ अभिहिंकृत्याहूय "इन्द्रायमद्वेनसुतमिन्द्रमिद्गाथिनोबृहदि" ति स्तोत्रियानुरूपौ पूर्ववच्छस्त्वाहूय "इन्द्रमानभिरयिमि" ति तृचमर्धर्चशः । "तुभ्येदेभिवहुता" इति तृचमर्धर्चशः । अन्त्या परिधानीया । याज्या पूर्ववत् ॥ इति प्रथमः ॥ अथ द्वितीयः ॥ अत्र द्वितीयपदाभ्यासः सर्वेषाम् ॥ मैत्रावरुणस्य ॥ अभिहिङ्कृत्याहूय "आतूनइन्द्रक्षुमन्तमाप्रद्रवपरावत" इति पूर्ववत्स्तोत्रियानुरूपौ शस्त्वाहूय "नह्यन्यंवलाकरम" इति तृचमर्धर्चशः । "अहंसप्तस्रवत" इति तृचं पच्छः । अन्त्या परिधानीया । याज्यादि पूर्ववत् ॥ ब्राह्मणाच्छंसिनः । अभिहिंकृत्याहूय "इन्द्रत्वावृषभमभिप्रगोपतिंगिरे" ति स्तोत्रियानुरूपौ पूर्ववच्छस्त्वाहूय "आतूनइन्द्रमद्र्यागे"-ति तृचमर्धर्चशः । "आदंगिराः प्रथमंदधिरेवयमि" ति तृचं पच्छः । अन्त्या परिधानीया । याज्यादि पूर्ववत् ॥ अथाच्छावाकस्य । अभिहिङ्कृत्याहूय "इदंवसोसुतमन्ध इन्द्रेहिमत्स्यन्धस" इति स्तोत्रियानुरूपौ पूर्ववच्छस्त्वाहूय "प्रसम्राजंचर्षणीनामि" ति तृचमर्धर्चशः । "अपादुशिप्र्यन्धसः सुदक्षस्य प्रहोषिणः" ... "अनाजुरस्पित्रोः सचे" ति तृचं पच्छः । अन्त्या

परिधानीया । याज्यादि पूर्ववत् ॥ इति द्वितीयः ॥ अथ तृतीयः ॥ तत्र उत्तमपदाभ्यासो मैत्रावरुणब्राह्मणाच्छंसिनोः । अच्छावाकस्य तु उत्तमपदान्त्यचतुरक्षराभ्यासः ॥ मैत्रावरुणस्य । अभिहिंकृत्याहूय "त्वेतानिषीदतात्वशत्रवागाहि" इति स्तोत्रियानुरूपौ पूर्वच्छस्त्वाहूय "नाकिरिन्द्रत्वदुत्तर" इति तृचमर्धर्चशः । "ऐपुचाकन्धिपुरुहूते" ति तृचं पच्छः । अन्त्या परिधानीया । याज्यादि पूर्ववत् ॥ ब्राह्मणाच्छंसिनः । अभिहिंकृत्याहूय "योगेयोगेतवस्तरं युञ्जन्तिबध्नमरुषमि" ति स्तोत्रियानुरूपौ पूर्ववच्छस्त्वाहूय "यदिन्द्राहंयथात्वमि" ति तृचमर्धर्चशः । "आरोदसीहर्यमाणि" इति तृचं पच्छः । अन्त्या परिधानीया । याज्यादि पूर्ववत् ॥ अच्छावाकस्य । अभिहिंकृत्याहूय "इन्द्रः सुतेषुसोमेषु इन्द्रसोमयातम" इति स्तोत्रियानुरूपौ पूर्ववच्छस्त्वाहूय "आद्यायअग्निमिन्धते" ३ इति तृचमर्धर्चशः । "अतेनावेनमममेनवचस्युवामि" ति तृचं पच्छः । अन्त्या परिधानीया । याज्यादि पूर्ववत् ॥

त्रीणि षष्ठिशतान्याश्विनं तस्य प्रयोगः ॥ "हिंभूर्भुवस्वरों शोंसावोमग्निर्होतागृहपतिः सराजा ३ ( पच्छः ) यजिष्ठः सप्रयज्वतामृतावोमुपप्रयंतो १४, स्वन्दसोमत्वानोअग्न ६, गृणीतउक्थ्योमग्निमीडेपुरोहितं ९, नः, स्वस्तयोग्निदूतं १२, जुपस्वनोवमिष्ठाह्वि २२, रयिवृहद्धानोत्वमग्नेव्रतपाअसि ८, चित्रराधसोत्वंनोअग्नेमहोभिः ९, वमोजरितृभ्योमिमंविप्रस्यवेधसः २२, त्वदग्नेवार्यवसोत्वमग्नेवसूं ८, रामादयावसोमवोध्यग्निः गांप ना १२, ( पच्छः )रुक्ममुरूव्यञ्चमश्वोमगन्ममहानममा ३, ( पच्छः ) स्वस्तिभिः सदानोमग्नेर्विवस्वदुषम, ३ ( इति प्रगाथं ककुबुत्तरां शंसेत् ) अस्मधेहिश्रवोवृ... ...अग्निनममा ३, ( पच्छः ) अग्निर्जनायदाशुषोमग्नेवाजस्यगोमतः ३, मतिभ्मजंभरक्षसोदहम-

तोंपुरुत्वाद्शवान् ३, वनुपः स्यामोंजनस्यगोपा ६, (पच्छः) पुत्रमङ्गिरोमग्निंमन्ये १०, (पच्छिशंसनं) स्तोतृभ्यआभरोंप्रतिष्यासून ७, उषः शुक्रेणशोचिषोमुषोभद्रेभिरागहि ४, कण्वाअहूषतोमिदंश्रेष्ठं २०, तउद्योंप्रत्युअदर्शि ६, दयास्त्रियोमुपस्तच्चित्रमाभर ३, सौभगान्यावहोमेताउत्याउषसः ४ (पच्छः) गावोनहजंव्युषा आवर्तमोंमहेनोअद्यबोधय १०, (पङ्क्तिशंसनं) अश्वसूनृतोमेषोउषाअपूर्व्य १५, अविन्द्रियाभिरूतिभों यदद्यस्थः परावति १०, अवोचामबृहन्नमोमाभात्यग्निरुषस ५, (पच्छः) विश्वान्यमृतासौभगानोमतारिषमतमस ५ (पच्छः) सदानोमिमाउवांदिवि ६, उतक्षियंतिसुक्षितोमाश्विनावतिरस्मदा६, वहंतुसोमपीतयोमबोधय ग्निजर्मउदेति ६, (पच्छः) हविष्मान्मनसादाशोमीडेद्यावापृथिवी ५, (पच्छः) पृथिवीउतद्योंमातभियतमं रथं १, माध्वीममश्रुतंहवोंसूर्योनोदिव ५, नृचक्षसोमुदुत्यंजातवेदसे ८, यातिस्वयुक्तिभोंचित्रंदेवानां ६, (पच्छः) उतद्योंनपोमित्रस्य १२, (पच्छः) तदेनोवसवोनिधेतनोमिन्द्रक्रतुम्नआभर २, शूरतरामसोमभित्वाशूर २, गव्यंतस्त्वाहवामहोबहवः सूरचक्षस २, राजानआशतोंमहीद्योः पृथिवीचन १, भरीमभोंतेहिद्यावापृथिवी १, धर्मणासूर्यंशुचोंविश्वस्यदेवमिचयस्ये (इत्येका द्विपदा पच्छः) नयारोषातिनग्रभोंशोंसावांबृहस्पतेअतियदर्योअर्हात् ३, (परिधानीया पच्छः) अस्मासुद्रविणंधेहिचित्रों" । ३६० । अश्विनेन ग्रहेणेत्यादि समानं पूर्वेण । अथातिरिक्तोक्थमभिव्युष्टौ च्छन्दोगानुसारेण शस्त्रमुच्यते । यदा-"त्रिकद्रुकेषुमहिषोयवाशिरमि" इति स्तुवन्ति तदा अभिहिंकृत्याहूय "त्रिकद्रुकेषुमहिषोयवाशिरामि"ति स्तोत्रियस्तृचः । "प्रोष्वस्मैपुरोरथमि"त्यनुरूपस्तृचः । अथ वा "ऐंद्रयाह्युपनः परावत"

इत्येका॥ "इन्द्रायहिद्यौरसुरोअनम्नते" त्येका। "भीष्वस्मैपुरोरथमि" त्येका। एतास्त्रिस्त्रोनुरूपः कर्तव्यः। स्तोत्रियानुरूपौ अर्धर्चशः शस्यौ। "शोंसावोमहांइन्द्रोनूवदि" ति त्रयोदशर्चं सूक्तं पच्छः। "ऋतुर्जनित्री" ति त्रयोदशर्चं पच्छः॥ अन्त्या परिधानीया। "त्वेपमित्थासमरणंशिमीवतोरि" ति याज्या। आश्विनवद्भक्षः॥

अथ समानुत्याप्रायश्चित्तम्॥ निमतानां प्रसवसन्निपाते संसवो भवति न ग्रावापाते न वा अन्तरधाने सति इदं प्रायश्चित्तम्। सवनदेवतावाहनपर्यन्तं त्वराकर्तव्यम्। लघवश्चोपायाः शतप्रातरनुवाकादिकर्तव्याः। ततो मरुत्वतीयशस्त्रे विशेषः। प्रतिपदनुचरादिमरुत्वतीयप्रगाथान्तं शस्त्वाहूय "कयाशुभासवयसः सनीडा" इति सूक्तं पञ्चदशर्चं पच्छः शस्त्वानाहूय "जनिष्ठउग्रोम" ति सूक्तं निविदादि समानम्॥ निष्केवल्ये विशेषः। स्तोत्रियानुरूपादि सामप्रगाथान्तं शस्त्वाहूय "योजातएवप्रथमोमनस्वानि" ति पञ्चदशर्चं पच्छः शस्त्वानाहूय "इन्द्रस्यनुवीर्याणी" त्येतस्मिन्निविदादि समानम्॥ वैश्वदेवशस्त्रे विशेषः॥ प्रतिपदनुचरादि "एवापित्र" इत्यन्तं शस्त्वाहूय "समानेवर्त्म" पच्छः शस्त्वानाहूय "आनोभद्रा" इति सूक्ते निविदादि समानम्। "जनिष्ठाउग्र, इन्द्रस्यनुवीर्याणि, आनोभद्रा" इत्येतेषु सूक्तेषु आहावो न कर्तव्यः। 'अनेकं चेत्सयसत्राहावः' इति वचनात्। अपि वा "कयाशुभा योजातएव समानेवर्त्म" एतेष्वेव निविदो दध्यात्। अस्मिन्पक्षे इतराणि "जनिष्ठाउग्र योजातसमाने" इति उद्धरेत्।

अथ निविन्नकालातिक्रमे प्रायश्चित्तम्। यत्र यन्निविन्नधानं विहितं तदतिक्रम्य अवसाने यदा अवसानं भवति तदा इ-

दं प्रायश्चित्तं कर्तव्यम् । यस्मिन्त्सूक्ते निविदातिपद्यते न तत्पुनः पठनीयं किंतु सूक्तशेषं समाप्याऽऽहूय "मापगामपथोवयमि" ति षडृचं सूक्तमर्धर्चशः शस्त्वाऽऽहूय तस्मिन्निविद्वत्यमन्यत्सूक्तमाहृत्य तस्मिन्त्सूक्ते निवित्स्थाने निविदं दध्यात् । तत्रोदाहरणं मरुत्वतीयशस्त्रे । "जनिष्ठाउग्र" इति सूक्ते निविदतिपद्यते तदा सूक्तशेषं समाप्य अनाहूय "कयाशुभासवयसः सनीडा इति निविदादि समानम् । एवं सर्वत्र निविद्धानीयसूक्तेषु सर्वत्र द्रष्टव्यम् । मापगामेतिपुरस्तात्सूक्तं शस्त्वेति सूक्तग्रहणं बृहस्पतिसवादिषु हीनसंस्थेषु मापगामेत्यखण्डसूक्तशंसनार्थम् ॥ निष्केवल्ये । "योजातएवप्रथमोमनस्वानि" ति पञ्चदशर्चं रौद्रं पच्छः । वैश्वदेवे तु "तद्देवस्यसवितुर्" इति सावित्रं निविद्धानीयं पच्छः । "तेहिद्यावापृथिवीविश्वशंभुवे" ति द्यावापृथिवीयं पच्छः । "अनश्वोजातो अनभीशुरि" त्यार्भवं निविद्धानीयं पच्छः । "परावतोयेदिधिषन्तआप्यमि" ति सप्तर्चं निविद्धानीयं पच्छः । आग्निमारुते । "वैश्वानरायधिषणामृतावृध" इति वैश्वानरीयं निविद्धानीयं पच्छः । "धारावरामरुत" इति मारुतं निविद्धानीयं पच्छः । "त्वमग्ने प्रथमो अङ्गिरा" इति जातवेदस्यं पच्छः । एवं सर्वेषु क्रतुषु द्रष्टव्यम् ॥

अथ सोमातिरेकप्रायश्चित्तम् । सोमातिरेके स्तुतशस्त्रोपजन इत्यादि प्रातःसवन अच्छावाकशस्त्रादूर्ध्वं सोमातिरेकः तदा होतुः शस्त्रम् । अभिहिंकृत्याहूय "अस्तिसोमोअयंसुतो गोधियतिमरुतामि" ति स्तोत्रियानुरूपौ शस्त्वाहूय "महाँइन्द्रोयओजसा अतोदेवाअवंतुन" इति यावदर्थमुप्योद्ग्रहीतव्याः । ऐन्द्रीभिर्वैष्णवीभिश्च स्तोमसतिशस्य अनुचन्त्यारिंशं प्रथमं षडृचं द्वितीयमाहूयान्त्यया परिदध्यात् । ऐन्द्र्या यजेत् वैष्णव्या वा । ऐन्द्रावैष्णव्या वा चेति

गाणगारिः। तदेव सूत्रकार आह। "संवांकर्मणासमित्थाहिनोमी"ति याज्या॥ माध्यंदिने अभिहिङ्कृत्याहूय "वण्महाँअसि सूर्योदुत्यदेर्शतंवपुरि"ति प्रगाथौ स्तोत्रियानुरूपौ शस्त्वाहूय "महाँइन्द्रोनृवदाचर्षणिप्रे"ति त्रयोदशर्चं पच्छः। "विष्णोर्नुकाम"ति षडृचं पच्छः। अस्यान्त्या परिधानीया। अच्छावाकत्वच्छत्रजपः सर्वत्र बोध्यः। "या विश्वासांजनितारामतीनामि"ति याज्या। तृतीयसवने चेद्रिच्यते तदा उक्थ्यसंस्थं कुर्वन्ति। द्विरात्रे चेद्रिच्यते तदा अभिहिङ्कृत्याहूय "प्रतत्तेअद्यशिपिविष्टनामार्यःशंसामिवयुनानिविद्वान्। तंत्वागृणामितवसमतव्यान्क्षयन्तमस्यरजसःपराके"ति स्तोत्रियानुरूपौ शस्त्वाहूय "महाँ इन्द्रोनृवदि"त्यादि समानं माध्यन्दिनेन। याज्याया विकल्पः। "त्वेपमित्थासमरणाशिमीवतोरि"ति वा याज्या॥

अथ क्रीते राजनि नष्टे दग्धे वापि दग्धानि सद्योहविर्धानानि यदा भवन्ति अमन्त्रकाणि समन्त्रकाणि वा कुर्युः। सोमनाशे तु अन्यं सोममानीय अभिषुत्य यजेत। सोमानधिगमे पूतीकाफाल्गुनानि च संगृह्याभिषुणुयुः। फाल्गुनानामभावे अन्या वा ओषधीः कुशदूर्वादीः पूतिकमिश्रायित्वा अभिषोतव्याः। प्रातःसवने सद्योगो दुग्धमभिषवार्थं मिश्रणीयं भवति। शृतं क्षीरं माध्यन्दिने। दधि तृतीयसवने मिश्रणीयम्। यदि फाल्गुनानि प्रतिनिधित्वेन प्रविष्टानि तदा श्रायन्तीयवारवन्तीये सामनी ब्रह्मसामाग्निष्टोमकार्ययोर्भवन्तो यथासंख्येन। एके शाखिनः श्रायन्तीयं यज्ञायज्ञीयकार्ये भवतीत्याहुः। ब्रह्मसाम तु प्राकृतमेवेति। स्तोत्रियानुरूपौ तु च्छन्दोगवशौ विदितव्यौ। विशेषस्तु यज्ञायज्ञीयस्य स्थाने प्रगस्यापि सोऽनुरूपं योनि व्याहारं शंसेद्यस्मिन्नस्यानुरूपात्। अनुरूपोत्तरमाहूय "यज्ञायज्ञाव" इति प्रगाथं यथाम्नायं शस्त्वाहूय "देवोद्रविणोदा" इति प्रगाथं यथाम्ना-

म्नायं शंसेत्। प्रग्रथनं न कर्त्तव्यमिति विशेषः। एवं प्रतिनिधिना क्रियमाणं प्रयोगमेकदक्षिणमुदवसानीयान्तं समाप्य तस्माद्देशादुदवसाय सोमं संपाद्य तमेव यज्ञं पुनः कुर्यात्। तस्मिन्प्रयोगे पूर्वस्य यज्ञस्य या दक्षिणास्ता दद्यात्। यद्युपपन्नोपि प्रतिनिधौ यागात्प्रागेव सोमो लभ्यते तदा प्रतिनिधिद्रव्यं त्यक्त्वा सोमेनैव यष्टव्यम्। तदा प्राकृतमेव शंसनादि। यदि दीक्षास्वक्रीतः सोमो रज्येत्तदा आसोमलाभाद्दीक्षा वर्धयेत् उपसत्सूपसदो वर्धयेत्। तत्र प्रधानकालाविरोधेनाहर्वर्धनं कर्तव्यम्। अहर्वर्धने प्रधानयागकालविरोधेनालभ्य सोमप्रतिनिधिमुपादाय पूर्वसंकल्पितकाले प्रधानयागं कुर्यात्। अथ वा। प्रायश्चित्तं हुत्वाऽऽरब्धं प्रयोगं विसृज्य सोमं संपाद्य तस्मै कर्मणे एव प्रयोगान्तरमारभेत। "भूस्वाहे"तीदं प्रायश्चित्तमुच्यते। अथ वा अस्यामवस्थायां शाखान्तरे प्रायश्चित्तविशेषोस्ति तत्कर्तव्यम्। सौत्येहनि तु सोमालाभे पूर्वोक्तप्रकारेण प्रतिनिधिना यष्टव्यम्। एवमेकाहेषु भवति। अहर्गणेषु तु मध्ये उदवसाय पुनःप्रयोगो न शक्यते कर्तुं सत्राहः क्रियते तदाऽऽरब्धप्रयोगं समाप्योदवसाय तदेवाहः पुनः प्रयुञ्जीरन्। सत्रे तु सत्त्रिणः सत्रं समाप्य संहताः सन्तस्तदेवाहः पुनः प्रयुञ्जीरन्निति विशेषः ॥

दीक्षितानामुपतापे परिहिते प्रातरनुवाकेऽनुपाकृते वा। ब्रह्मा "पुष्टिपते पुष्टिर" इति मन्त्रेणाहवनीये स्रुवेणाज्याहुतिं हुत्वा शीतोष्णा अपः सहानीय तासु एकविंशतियवान् कुशपिञ्जूलांश्चानवाय ताभिरद्भिरर्थं कुर्वीत। आचमनवर्जम्। ताभिरद्भिर्व्याधितमाप्लावयेत् "जीवाति सम्थना" इत्यादिना औषधिसूक्तेन "या ओषधीरि"त्यनेन। ब्रह्मा तत उपांशु "अन्वमिमतेऽनुपतिनौपातापनोति" त्यादिकं यथालिङ्गमङ्गानि

संस्पृशेत्। अमुमित्यत्र व्याधितस्य द्वितीयान्तं नाम निर्दिशेत्। असावित्यत्र संबुध्यन्तं व्याधितस्य नाम निर्दिशेत्। पूर्वं ब्रह्मणा सह आगताः सर्वे दीक्षिताः यथासनं गच्छेयुः॥ "त्रातारमिन्द्रमि" ति तार्क्ष्यस्य आद्या कर्तव्या। यद्यप्यन्यादैकाहिकाद्वैश्वदेवं सूक्तं भवति तथापि तदुद्धृत्य "स्वस्तिनोमिमीतामश्विनाभग" इति तृचां निविदं दध्यात्। एवमहरहः कर्तव्यं यावद्व्याधिर्गच्छति। यदा अगदो भवति तदा प्रकृत्या भवति यथाप्राप्तमेव॥

संस्थिते उपनते दीक्षिते मृते तमतीर्थेन निर्हृत्य अवभृथसंकल्पितदेशे निधाय लोकप्रसिद्धान्प्रेतालङ्कारान्कुर्युः। प्रेतस्य केशश्मश्रुलोमनखान् वापयति नलदेनानुलिम्पति नलदमालां प्रतिमुञ्चति। प्रेतस्य शरीरगतान्यन्त्राणि निष्पुरीषाणि कृत्वा पृषदाज्यं पूरयित्वा बन्धयितव्यानीत्येके। प्रत्यक्केशेन अहतेन वाससा प्राक्शिरसं प्रेतमाविष्पादं प्रकटपादं यथा भवति तथा आच्छादनं कुर्युः। तस्यैव वाससः खण्डं प्रेतस्य पुत्राः स्वीकुर्युः। अस्य प्रेतस्याग्नीन्द्रयोररण्योः समारोप्य देवयजनस्य दक्षिणतो बहिर्वेदि प्रेतमानीय स्वाग्नीन्मथित्वा निहृत्य तत्रैव विधिवद्दहेयुः। अनाहिताग्नौ सत्रिणि मृते त्वयं विशेषः। आहार्येण औपासनाग्निना दहेयुः। दीक्षितपत्नीर्यदि म्रियते तामपि आहार्येणैव दहेयुः। आहार्यशब्देन लौकिकोऽप्यग्निरुच्यते। अत्राप्यं विशेषः। येनाहिताग्निना सर्वाधानं कृतं तस्य पत्नीं लौकिकाग्निना येनार्धाधानं कृतं तस्य पत्नीमौपासनेन दहेयुः। अतः अत्र आहार्यशब्देन अश्रौताग्निर्लक्ष्यत इत्यवगम्यते। ततो दहनदेशात्प्रत्येत्य यत्पूर्वापरीभूतमहस्तत्समापयेयुः। तस्यायं प्रयोगः। यस्मिन्नहनि दीक्षितदहनं कृतं तस्मात्परमनन्तरमहः प्रासङ्गिकमुच्यते। तस्मिन्नहनि शस्त्रादीनि अभ्यासहिङ्कारवर्जानि भवेयुः।

निषेधस्तु यथासम्भवं कल्पनीयः । अस्मिन्नेवाहनि ग्रहग्रहणात्प्रागेव तीर्थेन निष्क्रम्य त्रिः प्रसव्यप्रदक्षिणं श्मशानायतनं परतो गत्वा तदायतनं परितः उपविशन्ति । श्मशानायतनात्पश्चाद्धोता तस्यैव उत्तरतोऽध्वर्युः अध्वर्योरेकपार्श्वे च्छन्दोगा उपविशन्ति । आयतनस्य दक्षिणतो ब्रह्मा उपविशति । "आयङ्गौः पृश्निरक्रमीदि" त्याद्यासु ऋक्षु उपांशु स्तुवते च्छन्दोगाः । स्तुते सति होता त्रिःप्रसव्यमायतनं परिव्रजन् स्तोत्रियमनुद्रवन् । यक्ष्यमाण ऋचः । तत्र मध्ये अन्ते च प्रणवो न कर्तव्यः । शंसत्यादिमार्मिधेनीधर्माश्च न भवन्ति । अनुमन्त्रणं कुर्यादित्यर्थः । "आयंगौः पृश्निः" ३ उपांशु "यामीश्चप्रेहिप्रेहिपथिभिरि" ति पश्चान मृचां द्वितीयामृचमुद्धरेत् । "मैनमग्ने विदहो" इति षट् । "पूषात्वेतश्चावयतुप्रविद्वानि" ति चतस्रः । "उपसर्पमातरंभूमिमि" ति चतस्रः । "सोमएकेभ्यः पवत" इति सूक्तम् । "उरुणसावसुतृपा उदुंबलौ १" एतदनुद्रवणं समाप्य अनन्तरमस्थिसंचयनं कृत्वा तमस्थिकुम्भं तीर्थेन प्रविश्य यत्र मृतस्य पूर्वमासनं स्थितं तत्रास्थिकुम्भमासादयेत् । भक्षेषु प्राणभक्षान्भक्षयित्वा दक्षिणे मार्जालीये निनयेयुर्दक्षिणस्यां वेदिश्रोण्याम् । एवंप्रकारेण एतदहः समाप्य अनन्तरं सप्तदशस्तोमं त्रिवृत्पवमानकं रथन्तरं पृष्ठमग्निष्टोमसंस्थमहरन्तरं दीक्षितमरणनिमित्तं सत्रमध्ये सत्रिभिः कर्तव्यम् । एतस्मिन्नहनि समाप्ते एतान्यस्थीनि अवभृथकाले अवभृथार्थसंकल्पितास्वप्सु कुम्भेन सह प्रक्षिपेयुः "एतस्य प्रेतस्य एतदहारि"ति वदन्तः सर्वे सत्रिणः । एवं दीक्षितमरणनिमित्तं कर्म कृत्वा अतः परं प्रेतस्य सम्बन्धो नास्तीति एके शाखिनः आमनन्ति । अतः परं सत्रमेव समाप्य यथेष्टं गच्छेयुः । इदानीं दहनादारभ्य पक्षान्तरमुच्यते । मृतेप्यग्नयः पूर्ववन्न्युप्ता एव तिष्ठन्ति । स्त्री-

योररण्योस्तु मन्थनेन अग्निं सद्य उत्पाद्य तेन पूर्वोक्तदेशे पात्रयवर्जं दग्ध्वा अस्थीनि सञ्चितानि निखायारब्धं सत्रं समाप्य समापनकालादारभ्य संवत्सरे पूर्णे तान्यस्थीन्यादाय यजमानस्थाने कृत्वा प्रातरनभ्यासमित्यादिविशेषविशिष्टेनाग्निष्टोमेन याजयेयुस्त एव सत्रिण इत्यपरः पक्षः । अस्मिन्पक्षे पूर्वस्मिंश्च पक्षे सत्रसमापने कर्तव्ये मृतपुरुषन्यूना एव समापयेयुः । अथ वा मृतस्य नेदिष्ठिनं वा दीक्षयेयुः । मृतस्य सन्निकृष्टं दीक्षयित्वा सत्रसमापनम् । निर्मन्थ्यदहनपक्षे नेदिष्ठव्यवेशे सत्यपि अस्थियज्ञो नित्य एव । गृहपतौ मृते तु प्रवृत्तमहः समाप्याऽवभृथं कृत्वा सत्रादुत्थानं भवति पुनः सत्रशेषसमापनम् । संवत्सरेऽस्थियज्ञः । यस्मिन्नहनि गृहपतिमरणम् । तयोरन्होः अनभ्यासमित्यादयः शस्त्रविकारा उक्ताः । इति सत्रेषु ॥

अथैकाहेषु । यजमानः पूर्वस्मिन्नासन आस्ते तस्मिन्नेवं मृतेपि शयीत यावत्स एकाहः समाप्यते । ततोऽहःसमापनं कृत्वा संस्थितेहनि अवभृथकाले अपगच्छन्तीष्वप्सु अवभृथकर्म कृत्वा प्रेतं तत्र अप्सु प्रेतं क्षिपेयुः । इत्यालेखनाचार्यमतम् । संस्थिते तस्मिन्नहनि. अवभृथकाले पूर्वेण सदो यो देशस्तस्मिन्देशे प्रेतं सर्वयज्ञपात्रैः सह तैरेवाग्निभिर्दहेयुः अयमेवास्यावभृथः । इति आश्मरथ्याचार्यमतम् । समाप्तानि सौमिकप्रायश्चित्तानि ॥

अथाप्तोर्यामस्य प्रयोग उच्यते ॥ स चैहिको नित्य इति वैदिकाः वदन्ति । सप्तानां सोमसंस्थानामन्तर्भूतत्वात् । अपरे ज्योतिराप्तोर्यामो नित्यः अयं तु काम्यः कामनाश्रवणादिति वदन्ति ॥

अथ सर्वस्तोमसर्वपृष्ठाप्तोर्यामप्रयोगः । प्रागाज्यशस्त्रादतिरात्रवत् । " सोअध्वराकरतिजातवेदोमग्निनरादीधितिभिर " श्रि

सूक्तं पञ्चविंशतिऋचमर्धर्चशः । अस्याद्यां सविग्राहं शंसेत । उत्तमा परिधानीया । याज्याः प्राकृता एव सर्वत्र । प्राऊगमैकाहिकम् । होत्रकाणां शस्त्राणि । तत्र च्छन्दोगा गर्भकारं स्तुवन्ति चेत् तदा स्तोत्रियानुरूपौ गर्भकारं स्तुवन्ति । मैत्रावरुणस्य । अभिहिङ्कृत्याहूय "आनोमित्रावरुणे" ति तृचः । "तानःशक्तंपार्थिवस्ये" ति तृचः । "आनोमित्रा ३" इति स्तोत्रियः । "शोंसत्वोमानोगन्तरिशा ३ तानस्तिपातनूपा" तृचः । पुनः "आनोगन्तरिशादसा ३" इत्यनुरूपः । "शोंसक्षपः परिपस्वजे" इति नाभाकस्तृचो गायत्रीकारंशस्यः । "यः ककुभोनिधारय" इति वा । पड्गायत्रीः कृत्वेत्यर्थः । महावालभिदं चेच्छंसेदूर्ध्वमनुरूपेभ्य आरम्भणीयाभ्यो वा. नाभाकांस्तृचानावपेरन् गायत्रीकारमिति वचनात् । "मित्रंवयंहवामहेमित्रंहुवेपूतदक्षो ३ मयवांमित्रावरुणापुरूरूणाचिध्यस्तिकाव्येभिरदाभ्य" ति पञ्चषडहस्तोत्रियमञ्जः । तदेवतमन्यस्य पूर्वस्य स्थाने कुर्वीतेति वचनात्काव्येभिरदाभ्येत्यस्यावापः । "प्रतिनामुरउदिते" ति द्वे शस्त्वाहूय "ते स्यामदेववरुणे" ति परिदध्यात् । सर्वमर्धर्चशः शस्यम् । अथ वा "मित्रंवयंहवामह" इति स्तोत्रियः । नित्या याज्या । ब्राह्मणाच्छंसिनः । अभिहिङ्कृत्य "इन्द्रमिदगाथिनोबृहदि" ति द्वे । "इन्द्रवाजेपुनोवे" त्येका । "युञ्जन्तिब्रध्नमरुषमि" ति तिस्रः । "इन्द्रमिद्गाथिनोबृहदि" ति द्वे । "इन्द्रवाजेषुनोअवे" त्येका । "शों०मानोयाहिसुतावत" इति तिस्रः । "आत्वागमन्यदिश्रवदि" ति तिस्रः । पुनः "आनोयाही" ति तिस्रः । "शों०पूर्वीष्टइन्द्रोपमातय" इति नाभाकास्तिस्रो गायत्रीकारं शस्याः । "आयाहिसुषुमाहिते ३, इन्द्रेणसंहिदक्षसे ?, आदहस्वधामनु २, इन्द्रोदधीचोअस्थभि ३, उत्तिष्ठन्नोजसासह ३,

भिन्धिविश्वाअपद्विषः ३ ” इति तृचः षडहस्तोत्रियसञ्ज्ञकः “ उद्धेदभिश्रुतामघमि ” ति द्वे शस्त्वाहूय “ मनइन्द्राशिवः सखे ” ति परिदध्यात। अयमेकाहिकान्त्यस्तृचः। जपादि प्राकृतमेव। केचित्तु “ योगेयोगेतवस्तरमि ” त्यनुरूपमिच्छन्ति। केचित् “ आयाहि ” इतिं तृचं स्तोत्रियमिच्छन्ति। तत्र च्छन्दोगवशान्निर्णयः। अच्छावाकस्य। अभिहिङ्कृत्य “ इन्द्राग्नीआगतंसुतं३ तमीडिष्वयोअर्चिषा३ इन्द्राग्नीआगतमि ” ति स्तोत्रियः। “ शों० मिन्द्राग्नीअवसस्परि ३ आयुवेमिश्रुतागिरं ३ ” पुनः “ इन्द्राग्नीअयमस्परि ” इत्यनुरूपः “ शों तावामध्येयसयाणामि ” ति नाभाकः तिस्रो गायत्रीकारशस्यः। “ इन्द्रेअग्नानमो बृहत्‌ ३ नाहुवेययोरिदं ३ इयंवामस्यमन्मनः ३ इन्द्राग्नीयुवामिमे ३ प्रक्षस्यविस्य ” ३ पञ्चतृचाः षडहस्तोत्रियसञ्ज्ञकाः। “ इन्द्राग्नीअवसागतमि ” ति द्वे शस्त्वाहूय “ गोमद्धिरण्यवद्वसु ” इति परिदध्यात्। अयमेकान्त्यस्तृचः। सर्वमर्धर्चशस्यम्। जपादि प्राकृतमेव। महावालभिद्भावे स्तोत्रियानुरूपानन्तरं षडहस्तोत्रियादि समानम्॥

अथ माध्यन्दिनं सवनम्॥ होतुर्मरुत्वतीये अभिहिङ्कारादायौ। “ आत्वारथंयथोतय इदं वसोसुतमन्ध ” इति मरुत्वतीयस्य प्रतिपदनुचरौ शस्त्वा “ शों० मिन्द्रनेदीय एदिहिप्रैतुब्रह्मणस्पतिः उत्तिष्ठ ब्रह्मणस्पते त्वमूनं ब्रह्मणस्पतिरि ” ति चत्वारः प्रगाथा बृहतीकारशस्याः। बृहतीकारमितरेषु पृष्ठेष्विति वचनात्। चतुरक्षरौ पादौ द्विरभ्यस्य तत्रैवावसाय उत्तरौ पादौ समभ्यस्य प्रणुयात्। एतद्बृहतीकारशंसनम्। एषां प्रगाथानां सकृत्तृचस्थाने कर्तव्यम्। अनेकानन्तर्ये सकृत्तृचर्यञ्चाज्ञामित्युक्तत्वात्। “ शों आग्नर्नेता ” शों० त्वंसोमक्रतुभिः, शों० पिन्वंत्यपः ” इति तिस्रो ... पच्छः। “ शों० प्रवइन्द्रायबृहते, बृहदिन्द्रायगायत,... न क्रिः सुदामो

स्थमि''ति त्रयः प्रगाथा अर्धर्चशस्याः । एतेषामपि सकृत्पृथग्वाह्वानम् । ''शों० कयाशुभासवयसे'' ति पञ्चदशर्चं पच्छः । ''जनिष्ठा उग्र''सेकादशर्चं पच्छः । षट् शस्त्वा निवित् । उत्तमा परिधानीया । याज्या प्राकृता ॥ निष्केवल्ये '' त्वामिद्धिहवामहे '' इति प्रगाथो बृहतीकारशस्यः । ''अभिसोममिन्द्रमन्दतुत्वे''ति तिस्रोऽर्धर्चशः । अस्मिंस्तृचे प्रत्यृचं मध्यमेषु पादेषु न्यूङ्खः । वृषाकपौ न्यूङ्खो दर्शयिष्यते । आसामर्धर्चावसानेषु न्यूङ्खादिप्रतिगरः प्रकृतः प्रणवेषु प्रतिगरः प्राकृतः । पुनः ''त्वामिद्धिहवामह'' इति पूर्ववत्स्तोत्रियः । ''शों० त्वंह्येहिचेरव'' इति बृहतीकारम् । ''श्रुधीहवविपिपानस्याद्रेरि''ति तिस्रोऽर्धर्चशः । अस्मिन्नपि तृचे मध्यमपादेषु न्यूङ्खः प्रतिगरश्च पूर्ववत् । पुनः ''त्वंह्येहिचेरव'' इति द्वे पूर्ववत् ॥ इत्यनुरूपः । '' शों० यद्द्यावान''ति धाय्या । '' शों० अभित्वाशूरनोनुमोभयंश्रृणवचनस्त्वमिन्द्रप्रतूर्तिषु'' इति त्रयः प्रगाथा अर्धर्चशस्याः । एतेषामपि सकृत्पृथग्वाह्वानम । '' शों० यदिदासे''ति नवर्चं सूक्तं पच्छः । ''इन्द्रस्यनुवीर्याणी'' ति पञ्चदशर्चं पच्छः । अष्टौ शस्त्वा निवित् । उत्तमा परिधानीया । याज्या प्राकृता ॥ अथ मैत्रावरुणस्य ॥ अभिहिङ्काराह्वानौ । '' कयानश्चित्रआभुवदि'' ति तिस्रोऽर्धर्चशः । ''विदामघवन्विदे'' त्यादिनवर्चो पहाराम्न्यां त्रिभिरर्धर्चैरवसाय त्रिभिः प्रणुयात् । एवं कृते नव तिस्र ऋचो भवन्ति । तासामुत्तमेन प्रणवेन ''एवाह्येवैवा'' इत्यादि नवपुरीषपदान्युपसन्तनुयात् । तत्रायं शंसनप्रकारः । ''कयानश्चित्र ०३स्यूतिभोविदामघवन्विदागातुमनुशंसिषोदिशः शिक्षाशचीनांपतेपूर्वीणांपुरूवस आभिष्ठुम्भिष्टिभिः प्रचेतनप्रचेतय इन्द्रद्युम्नायनइष एवाहिशक्रोरायेवाजायवज्रिवः शविष्ठवज्रिन्नृञ्जसेमंहिष्ठवज्रिन्नृञ्जस आयाहिपिबमत्स्वोविदारायः सुवीर्यभुवोवाजा-

तानि यथाप्राठमेव शंसेत् । तत्रायं शंसनप्रकारः । "विद्मामघवन्न्" इत्यादि "प्रचेनये" इत्यन्तमनवानमुक्त्वावस्येत् । "इन्द्रद्युम्नाये" इत्यादि "आयाहिपिबमत्स्वामि" ति प्रणुयात् । "विद्माराय" इत्यारभ्य "उतनोनये" इत्यन्तमनवानमुक्त्वावस्येत् । "इन्द्रोविदेतमुस्तुष" इत्यादि "क्रतुः प्रच्छदऋतंबृहोमि" ति प्रणुयात् । "इन्द्रंधनस्ये" त्यादि "हिनोतनवि" इत्यन्तमनवानमुक्त्वावस्येत् । "पूर्तिः शविष्ठ" इत्यादि "सुशेवाअद्रयोमि" ति प्रणवेन "एवाह्येवैवाहि" इत्यादि पुरीषपदान्युपसन्तनुयात् । "विद्मामध्वन्विदो" इति प्रणवेन "कयानश्चित्रआभुवदि" ति तृचमुपसन्तनुयात् । इति स्तोत्रियः । "शों०कयात्वंनऊत्ये" ति तिस्रोऽर्धर्चशः । "स्वादोरित्थाविषूवतः उपनोहरिभिः सुतमिन्द्रंविश्वाअवीवृधन्नि" ति त्र्यस्तृचा । अत्यर्धर्चकारं तिस्रः कृत्वा शंसेत् । तत्रैवं प्रकारः । "स्वादोरित्थे" त्यादि "सोमश्रीणन्तिपृश्नय" इत्यन्तमनवानमुक्त्वावस्येत् । "प्रियाइन्द्र" इत्यादि "वस्वीरनुस्वराज्यो" मिति प्रणवेनोपसन्तनुयात् । "उपनोहरिभिः सुतमि" त्यारभ्य "शतक्रतुरि" त्यन्तमनवानमुक्त्वावस्येत् । "उपनो हरिभिः सुतंत्वंहि वृत्रहोन्न" त्यादि "सुतोमि" ति प्रणवेन "इन्द्रंविश्वाअवीवृधन्नि" त्यारभ्य "शवसस्पत" इत्यन्तमनवानमुक्त्वावस्येत् । "त्वामभिप्रणोनुम" इत्यारभ्य "महतमघोमि" ति प्रणवेन "कयात्वंनऊत्ये" ति तृचमुपसन्तनुयात् । इत्यनुरूपः । "शों०कस्तमिन्द्रत्वावसुमि" त्यैकाहिकः प्रगाथोऽर्धर्चशः । "मोषुत्वावाघतश्चने" ति सद्विपदः सामप्रगाथोऽर्धर्चशः । होत्रकाणां सामप्रगाथेभ्यः आहावो नास्ति । पञ्चाक्षराणि माध्यन्दिन इति वचनात् । उपसमभ्यस्ताद्द्विपदाम् । "श्येनपात्रमाद भृगाय स्काभोव ज्रहस्ततमु० पितरं हुवोशो सत्रासदानि इति सामसूक्तं पञ्चर्चं पच्छः । "आसत्योयातिव" त्यहीन-

सूक्तमेकत्रिंशर्चं पच्छः। "एवात्वामिन्द्र" इत्यैकाहिकमेकादशर्चं पच्छः। अन्त्या परिधानीया। षडहस्तोत्रियानुरूपवत्तु अहीनसूक्तमाप्तिः। अथ ब्राह्मणाच्छंसिनः। अभिहिङ्कृत्याहूय "अभिप्रवः सुराधसमि" ति द्वे। "यच्चाद्वइन्द्रतेशतमि" ति द्वे। पुनः "अभिप्रवः सुराधसमि" ति द्वे। एते प्रगाथा बृहतीकाराः। इति स्तोत्रियः। "शों० प्रसुश्रुतंसुराधसमि" ति द्वे। "यदिन्द्रयावतस्त्वमि" ति द्वे। पुनः "प्रसुश्रुतंसुराधसमि" ति द्वे। बृहतीकारशस्याः। इत्यनुरूपः। "शों० उदुत्येम-धुमत्तम" इत्यैकाहिकप्रगाथः। "इन्द्रत्रिधातुशरणमि" ति सामप्रगाथोऽर्धर्चशः। "शों०योजातएवे" ति साम सूक्तं षडृचं पच्छः। अन्त्या परिधानीया। अच्छावाकस्य। अभिहिङ्काराहावौ। "तरोभिर्वोविदद्वसुमि" ति द्वे बृहतीकारम् "रेवतीर्नः सधमादे" इति तिस्रोऽर्धर्चशः। पुनः "तरोभिर्वो विदद्वसुमि" ति द्वे बृहतीकारम्। "शों०तरुणरिततिसिषासति" इति द्वे बृहतीकारम्। "रेवाँ इन्द्रेवतस्तोते" ति तिस्रोऽर्धर्चशः। पुनः "तरणिरित्तसिषासती" ति द्वे बृहतीकारम्। "शों० मुदिन्वस्यरिच्यते" इत्यैकाहिकः प्रगाथः। "इन्द्रमिद्देवता-तय" इति सामप्रगाथोऽर्धर्चशः। "शों०प्रभूरेकोरायिपतेरयीणामि" ति साम सूक्तं पञ्चर्चं पच्छः। "शासद्वह्निर्दुहितुर्नप्त्यगादि" ति अहीनसूक्तं द्वाविंशत्यृचं पच्छः। "इमामूषुप्रभृतिमि" त्यैकाहिकं सूक्तमेकादशर्चं पच्छः। उपोत्तमामुद्धरेत्। उत्तमा परिधानीया। सर्वत्र याज्याः प्राकृताः॥

अथ तृतीयसवनम्॥ वैश्वदेवस्य प्राकृतौ प्रतिपदनुचरौ शस्त्वाहूय "तद्देवस्यसवितुरि" ति सावित्रं निविद्धानं पच्छः। एकां शिष्ट्वा निविदं। एकया च आहूय "कतरापूर्वा

तरापरायेऽहरि" ति द्यावापृथिवीयं निविद्धानमेकादशर्चं पच्छः । एकां शिष्ट्वा निवित् । आहूय "सुरूपकृत्नुमूतय" इति धाय्या अर्धर्चशः । आहूय "अनश्वोजात" इत्यार्भवं सूक्तं नवर्चम् । एकां शिष्ट्वा निवित् । आहूय "अयंवेन" इति पच्छः । आहूय "येभ्यो-भ्योमाता" इति पच्छः । आहूय "एवापित्रे" इति पच्छः । आ-हूय "इदत्थारौद्रमि" ति पञ्चविंशकं पच्छः । अस्य सूक्तस्य "पूर्वीवगन्तुर्दाशितसूनृतायो" मित्यन्तं शस्त्वा "येयज्ञेने" त्येकादशर्चं सूक्तमुपमन्तनुयात् । अस्य सूक्तस्याद्याश्चतस्र ऋचः पच्छः । उत्तमा च पच्छः । शिष्टाः पद् अर्धर्चशः । "यस्मिन्नश्रान्ताअ-सनामवाजमि" ति प्रणवेन सह गृणानो "अद्भिर्देववानि" त्यु-पमन्तनुयात् । एते द्वे ऋचौ पच्छः शस्त्वा "स्वस्तिनोमिमीता-मश्विनाभग" इति तृचं निविद्धानीयं पच्छः । एकां शिष्ट्वा नि-वित् । "अदितिर्द्यौरदितिरि" ति परिधानीया । अथाग्निमारुत-म् ॥ अभिहिङ्कारादाहावौ । "वैश्वानरायधिषणामृतावृध " इति प-ञ्चदशर्चं निविद्धानीयं पच्छः । अस्याद्यं पच्छ ऋगावानं शंसेत् । एकां शिष्ट्वा निवित् । आहूय "शन्नः करत्यर्वते" इति धाय्या । आहूय "प्रयज्यव" इति मारुतं दशर्चं पच्छो निविद्धानम् । ए-कां शिष्ट्वा निवित् । आहूय "यज्ञायज्ञावोअग्नय" इति प्रगाथः ककुबुत्तराकारशस्यः । "त्वमग्नेयज्ञानामि" ति तिस्रोऽर्धर्चशः । पुनः "यज्ञायज्ञाव" इति पूर्ववत् । इति स्तोत्रियः । "देवोवोद्र-विणोदा" इति प्रगाथः ककुबुत्तराकारशस्यः । "त्वामीडेअध-द्विने" ति तिस्रोऽर्धर्चशः । पुनः "देवोवोद्रविणोदा" इति पूर्वव-त् । इत्यनुरूपः । आहूय "इमंस्तोममर्हते" इति जातवेदस्यं नि-विद्धानीयं षोडशर्चं पच्छः । एकां शिष्ट्वा निवित् । आपोहिष्ठीया-दि समानमैकाहिकम् ॥

अथोक्थ्यशस्त्राणि॥ मैत्रावरुणस्य। अभिहिङ्कारादावौ। "एवूषुब्रवाणित" इति तिस्रोऽर्धर्चशः। "अग्नेत्वंनोअन्तम" इति द्वे द्विपदे। "तत्वाशोचिष्ठदीदिव" इत्येका। एता द्विपदाः पच्छः। "एवूषुब्रवाणित" इति तिस्रः पूर्ववत्। इति स्तोत्रियः। "शों० माग्निरगामिभारत" इति तिस्रोऽर्धर्चशः। "अग्नेभवसुपामिधासमिद्ध" इति तिस्रो द्विपदा पच्छः। पुनः "आग्निरगामिभारत" इति तिस्रोऽर्धर्चशः। इत्यनुरूपः। आहूय "अभिप्रवः सुराधसं" इत्याद्या वालखिल्या विहरेत्। विहारस्त्रिविधः। हौण्डिनो महावालभिच्चेति। एतेषां त्रयाणामैच्छिको विकल्पः। हौण्डिनाविहरणं तावदुच्यते। "अभिप्रवः सुराधसमि" त्यादिवालखिल्यसंज्ञकान्यष्टौ सूक्तानि। तत्र प्रथमद्वितीये सूक्ते षोडशिवत्पादान्यवधाय अर्धर्चशः शंसेत्। तृतीयचतुर्थे अर्धर्चशो विहरेत्। ऋक्शः पञ्चमषष्ठे विहरेत्। इत्येकः पक्षः। अथ वा प्रथमद्वितीये सूक्ते व्यतिमर्शं पच्छो विहरेत्। तृतीयचतुर्थे सूक्ते व्यतिमर्शमर्धर्चशो विहरेत्। पञ्चमषष्ठे व्यतिमर्शमृक्शः। व्यतिमर्शं नाम पूर्वस्य प्रथमा उत्तरस्य द्वितीयया उत्तरस्य प्रथमा पूर्वस्य द्वितीयया तयोर्नर्चा प्रथमद्वितीयाभ्यां पादाभ्यामवस्येत्। प्रथमद्वितीयाभ्यां प्रणुयात्। तृतीयोत्तमाभ्यामवस्येत्। तृतीयोत्तमाभ्यां प्रणुयात्। इति द्वितीयः प्रकारः। इति तु हौण्डिनो॥ अथ महावालभित्संज्ञको विहार उच्यते। एतान्येव षट्सूक्तानि व्यतिमर्शं पच्छो विहरेत्। एतानि षट्सूक्तानि अष्टाविंशतिप्रगाथा भवन्ति। "इन्द्रोनिहवस्य गोपतिरि" ति पञ्चैकपदाः सूत्रे पठिताः। "प्रचेतनप्रचेतये" त्याद्यास्त्रयोविंशतिर्महानाम्नीनां पुरीषपदसहितानाम्। अष्टाक्षराः पादा ग्राह्याः। एवमष्टाविंशतिः एकपदा भवन्ति। तत्रैकैकस्मिन्प्रगाथे समाप्ते प्रणवेनावसाय एकैकामेकपदां प्रणवानामुपसन्तनुया-

त । अर्धर्चन्ततामुपसन्दध्यात् । एवं षट्सूक्तानि पच्छो विहृत्य पुनर- प्येतानि षट्सूक्तानि व्यतिमर्शमर्धर्चशो विहरेत् । तत्र एता एकपदाः पूर्ववत् । एवमर्धर्चशो विहृत्य एतान्येव षट्सूक्तानि व्यतिमर्शमृ- कृशो विहरेत् । तत्रापि तास्वेकपदाः पूर्ववत् । एवमृकृशो विहृत्य एतान्येव षट्सूक्तानि यथासमाम्नातमर्धर्चशः शंसेत् । नात्रैकपदा उपसन्दध्यात् । एवं शंसनं महावालभिदुच्यते । एवं त्रिविधो वि- हार उक्तः । एतेषामन्यतमेन विहारेण षट्सूक्तानि शस्त्वा सप्तमा- ष्टमे सूक्ते विहृत्य शंसेत् । अष्टमं शस्त्वा सप्तमं शंसेदित्यर्थः । उ- भेऽप्यर्धर्चशः । तदनन्तरम् " इमानिवांभागधेयानी"ति सौपर्णसं- ज्ञकं सूक्तं सप्तर्चं पच्छः । एतामेव पुनस्त्रिपद्या । एतामेव अनवानं शस्त्वा प्रणवेनावसाय पुनरेतामेव त्रिपद्या । पुनरेतामेवार्धर्चशः पु- नरेतामेव पच्छः शंसेत् । एतद्दूरोहणं शस्त्वा । " इन्द्रावरुणासो- मनसमि"ति शिष्टामृचं पच्छः शस्त्वा " आवोराजानावि"ति ऐ- काहिकं सूक्तं पञ्चर्चं पच्छः । उत्तमा परिधानीया । विहारे " अ- भिप्रवमन्दे"त्यादीनां षण्णां सूक्तानाम् " ओथामोदैव " इति प्रतिगरः प्रणवेषु " मदामोदैवोमथ " इति अवसानप्र- णवेषु प्रतिगरौ । सर्वास्वेकपदासु " ओथामोदैवोमि " ति प्रणवान्तः प्रतिगरः । दूरोहणःप्रमाने च अन्यत्र प्राकृत एव प्रतिगरः । शस्त्रयाज्या प्रकृतिवत् ॥ अथ ब्राह्मणाच्छंसिनः । अ- भिहिङ्काराहावौ । "वयमुत्वे" ति द्वे तिस्रस्कारं ककुबुत्तराकारं तृतीयपञ्चमपादाभ्यामेव सर्वाः ककुभो भवन्ति । " इमानुक- म्भुवनासीपधामेति " तिस्रो द्विपदाः पच्छः । पुनः " वयमुत्वा- मपूर्व्योमि"ति प्रगाथः । इति स्तोत्रियः । "शों० योनइदमिदंपुरे" ति प्रगाथस्य तृतीयपञ्चमपदाभ्यामः । " हत्वायदेवे " ति द्वे द्विपदे पच्छः । " अयानाजामि " त्येका पच्छः । पुनः " यानइ-

दमिदंपुरे" ति पूर्ववत्। इत्यनुरूपः। "ओं० मपप्राचइन्द्रे" ति सुकीर्तिसञ्ज्ञकं सप्तर्चं पच्छः। अस्य सूक्तस्य चतुर्थीमर्धर्चशः। ततो "विहिमोतोरसृक्षते" ति वृषाकपिसञ्ज्ञकं सूक्तं त्रयोविंशत्यृचं सविग्राहं सन्यूङ्खं सनिनर्दं पङ्क्तिशंसनं शंसेत्। प्रत्यृचं प्रथमेऽर्धे विग्रहः। तृतीयेषु पादेषु न्यूङ्खो निनर्दश्च। तृतीयपादेषु द्वितीयं स्वरमोकारं त्रिमात्रमुदात्तं त्रिस्तस्य तस्य चोपरिष्टादपरिमितान् पञ्च वार्धोकाराननुदात्तानुत्तमस्य तु त्रीन् पूर्वमक्षरं निहन्यत इति न्यूङ्खः। निनर्दो नाम तृतीयपादान्त्यस्वरस्त्रिमात्रमोकारं कृत्वा उदात्तमुक्त्वा तदनन्तरमोकारद्वयमनुदात्तमुक्त्वा तदनन्तरमोकारमेकमुदात्तं त्रिमात्रः कर्तव्यः। अग्रे चतुर्थपादादि। इति निनर्दलक्षणं। "विहिमोतोरसृक्षतनेन्द्रंदेवममंसत यत्रों ३ ओ३ओ३ओ३ओ३ओ३ ३ ओ३ओ३ओ३ओ३ओ३ ३ ओ३ओ३ मदद्वृषाकपो ३ ओ३ओ३ मर्यः पुष्टेषुमत्सखा विश्वस्मादिन्द्रउत्तरोंपराहि द्रयावसिद्वृषाकपेरतिव्यथिरि" त्यादि। एवमेतत्सूक्तं त्रयोविंशत्यृचं शस्त्वा "इदञ्जनाउपश्रुत" इत्यादिकं कुन्तापसञ्ज्ञकं यथापठितं शंसेत्। तस्यादितश्चतुर्दशविग्राहं निनर्दं शंसेत्। तृतीयेषु पादेषूदात्तमनुदात्तपरं यत्प्रथमं तन्निनर्देत्। अस्योदाहरणम्। "इदञ्जनाउपमृतुनराशंसस्तविष्यते षष्टिंसहस्रानवतिञ्चकौरमआरुशमेषुदद्महेमि" ति। चतुर्दशर्चास्तानि पूर्वार्द्धे त्रयः पादाः तत्रैकेन द्वाभ्यां च विग्रहः। शेषोऽर्धर्चशः। एवं शस्त्वा "एताअश्वाआप्लवन्त" इति सप्तनिपदानि यथापठितं शंसेत्। अथ वा "एताअश्वाआप्लवन्त" इत्यादीनि। अ... निष्कानकामित सप्त १ यद्राहिनन्त्कथं हनतपर्णाकारं पुनः ... नरीति चैते द्वे पदे। एवमष्टादश पदानि शंसेत्। उत्तमेन प... ... ... क्रियणाद्रागिर्वति पद्मार्धर्चशः। शस्त्वा "...

क्" इति चतस्रो द्वेधाकारं प्रणवेनासन्तन्वन् शस्त्वा भुगित्यभिगत- इति त्रीणि पदानि यथानिशान्तं शस्त्वा " नमिदेवाअक्रंसते " त्यर्धर्चशः शस्त्वा " दित्यःहजरितरंगिरोभ्योदक्षिणामनयन्नि" ति सप्तपदानि यथापठितं शस्त्वा उत्तमेन पदेन प्रणुत्य " त्वमिन्द्रं- शरिणे" ति तिस्रोर्धर्चशः शस्त्वा " यदस्याअंहुभेद्या " इति अ- ष्टौ ऋचः सन्यूङ्खं मनिनर्द सविग्राहं शस्त्वा " कएनरोयज्ञप्राची- रजगन्ने " त्यृचो द्वे सन्यूङ्खं मनिनर्द सविग्राहं शस्त्वा " दधि- क्राव्णोअकारिषमि " त्येतामृचमर्धर्चशः शस्त्वा " सुतासोम- धुमत्तमा " इति तिस्रोर्धर्चशः शस्त्वा " अवद्रप्सोअंशुमतीमति- ष्ठरि " ति तिस्रः पच्छः शस्त्वा " अच्छाम इन्द्राम " त्यैकाहिकं सूक्तं दशर्चं पच्छः संमेत् । उत्तमा परिधानीया । याज्या प्राकृता ।

अथास्य शस्त्रस्य प्रतिगरा उच्यन्ते ॥ " विहिमोतोरसृक्षत "- त्यर्धर्चावसानेषु प्राकृतः प्रतिगरः । यत्रोइत्यत्र न्यूङ्खे ओंइति त्रिमा- त्रमुक्त्वा "मदन्तृपाकपो" इत्यत्र "मदेथमदैवोमि" त्युक्त्वा निनर्द- मुक्त्वा "मर्यः पुष्टिपुमत्स्मवे" त्यवमाने "ओथामोदैवे" ति ब्रूयात् । ऋगन्तप्रणवे प्राकृतः प्रतिगरः । "इदंजनाउपश्रुते" त्यादि चतुर्दश- र्क्षु "ओथामोदैवोमि" ति प्रतिगरः । प्रतिगरं चाद्याक्षरमनुदात्तमु- क्त्वा द्वितीयमुदात्तं ब्रूयात् । अवसानेषु प्राकृतः प्रतिगरः । " यः सभेयोविदथ्य " इत्यारभ्य " विततौकिरणौ " इत्येत- दन्तं प्राकृतम् । " विततौकिरणाविति " ति षडर्क्षु "दुंदुभिमावा- हतनाभ्यांजरितरोथामोदैवाकोशाविलेजरितरोथामोदैव रजानिग्रन्थे- र्धानांजरितरोथामोदैव उपानाहिपादंजरितरोथामोदैव, उत्तरांज- नीमांजन्यांजरितरोथामोदैव उत्तरांजनीदरलैन्यांजरि, तरोथामोदै- व " इत्यवसानेषु यथाक्रमं भवति । प्रणवेषु प्राकृतः । " इहेत्थ- प्रागि " ति चतुर्ऋक्षु " अध्यासूनिजरितरोथामोदैः " ओं पृषातका-

निजरितरोथामोदैवों अश्वत्थपलाशंजरितरोथामोदैवों पिपीलिकाव-टोजरितरोथामोदैवों" इति प्रणवेषु यथाक्रमं भवति। अवसानेषु प्रागि-तिभुगित्यभिगतइति त्रिषु पदेषु "श्वाजरितरोथामोदैव पर्णशरोजरित-रोथामोदैव गोशफजरितरोथामोदैवे" ति यथाक्रमं प्रतिगरः। "वामदेवा-अक्रंसत" यस्यामृचि "परनीयीपश्यतेजरितरोथामोदैव" इत्यवसाने। "होतास्त्रिष्टमिनंजरितरोथामोदैव" इति प्रणवे। "आदित्याहजरितरं गिरेभ्य" इत्यस्मिन्पदे प्राकृतः प्रतिगरः। तांहजरितरित्यादिषु पञ्चदशसु पदेषु "ॐ हजरितरोथामोदैव तथाहजरितरोथामो-दैव" इति प्रतिगरौ व्यत्यासं भवतः। "प्रत्येयमृभवतोमि" त्यस्मिन्प्रणवः प्रतिगरः। "त्यामिन्द्रशर्भरिणे" ति तिसृषु ऋ-क्षु प्राकृतः प्रतिगरः। "यस्या अहुभेद्या" इत्यष्टासु "कर्णन-रोयद्धप्रीची" त्येतयोश्च। "ई ३ इइइइइई ३ इइइईई ३ इइ-३ ईई ३ इइई ३ किमयमिदमाहो ३ ॐॐॐोथामोदैवोमि" ति न्यूङ्खानिनर्दयोः प्रतिगरः। अवसाने प्राकृतः। "दधिक्रा-व्णो" इत्यारभ्यासमाप्तेः "विहिमोतोरि" त्यस्मात्पूर्वं च प्रा-कृत एवं प्रतिगरः॥ अथाच्छावाकस्य॥ अभिहिङ्कृत्याहावो। "अयाहीन्द्रगिर्वणे" इति तिस्रोर्धर्चशः। "प्रवइन्द्रायवृत्रहन्त-माये" ति तिस्रो द्विपदा पच्छः। पुन "अयाहीन्द्रगिर्वण" इति पूर्ववत्। इति स्तोत्रियः। "शोंअयन्तइन्द्रगिर्वण" इति तिस्रोर्धर्चशः। "विश्वतोदानंविश्वत" इति तिस्रो द्विपदाः पच्छः। पुनः "अयन्तइन्द्रगिर्वण" इति पूर्ववत्। इत्यनुरूपः। "शों० प्रगोमहमन्तयोयन्तुविष्णव" इति नवर्चमेतस्यास्य [illegible] सन्यूङ्खं सनिनर्दं सविग्रहमर्धर्चशः शंसेत्। "ऋतुर्जनित्री" ति सूक्तं वयोदशर्चं पच्छः। "नूमर्त" इति सूक्तं सप्तकं पच्छः। "भवामित्र" इति सूक्तं पञ्चकं पच्छः। "संवांकर्मणे" ति सूक्तमष्टर्चं

पच्छः। अन्त्या परिधानीया। "ॐ३ओओओओओओओओओओओओओओओओ मदेमधोर्मन्दिरस्यमदैवो ३ओओओमौथामोदैवो" मिति प्रत्योमहे इत्यस्य प्रतिगरः। अवसाने अन्यत्र च प्राकृतः प्रतिगरः। याज्या प्राकृती षोडशिशस्त्रादि आश्विनशस्त्रान्तमतिरात्रवत्॥

अथारिक्तोक्थानि चत्वारि शस्त्राणि॥ तेषां पादाभ्यासवर्जं पर्यायवच्छंसनविधिः। तत्रहोतुराद्यशस्त्रं "शों०जराबोधतद्विविठिज्जरमाणःसमिध्यस" इति स्तोत्रियानुरूपौ अर्धर्चशः शस्त्वा "अग्निनेन्द्रेणे" ति सूक्तं चतुर्विंशत्यृचम् "आवोंग्रथनियच्छतमि" त्येतं पच्छः। "नमोवाकेप्रस्थित" इत्यर्धर्चशः शस्त्वा "स्वाहाकृतस्यतृंपमि" ति पंक्तिशंसेत्। "आभात्यग्निरि" ति सूक्तं पञ्चर्चं पच्छः। "क्षेत्रस्यपतिनावयमि" ति परिदध्यात्पच्छः। "यथाहोतर्मनुष" इति याज्या। मैत्रावरुणस्य। "यदद्यकच्चवृत्रहन्नुदेदभिश्रुतामघमि" ति स्तोत्रियानुरूपौ। "त्यमुवः सत्रासाहं सत्रातेअनुकृष्टय" इति वा स्तोत्रियानुरूपौ। "आनोविश्वाभिरि" ति त्रयोत्रिंशतिः अर्धर्चशः। "प्रातर्ग्रावाणे" ति सूक्तं पञ्चर्चं पच्छः। "क्षेत्रस्यपतेमधुमन्तमूर्मिमि" ति परिधानीया पच्छः। "अम्मैवयंयद्वावाने" ति याज्या। छन्दोगवशान्निर्णयः। अथ ब्राह्मणाच्छंसिनः। "तद्वोगायसुतेसचापुरुहूताय" ... "मिन्द्रायगायते" ति स्तोत्रियानुरूपौ। "तमिन्द्रंवाजयामसिमहांइन्द्रोयओजसे" ति वा। "आनूनमश्विनायुवमि" ति सूक्तमेकविंशत्यृचमर्धर्चशः। "यदिन्द्रेणमरथमि" त्येतां पच्छः। "यदद्याश्विनावहमि" त्येतामर्धर्चश एव। "तांवांरथमि" ति सूक्तं सप्तर्चं पच्छः। स्तीर्णे बर्हिषि समिधाने अग्नौ सूक्तेनेति याज्या। अथाच्छावाकस्य। "इदंविष्णुर्विचक्रमे" इति तृचः स्तोत्रियः। "तद्विष्णोः परमंपदमि" ति द्वे। "उतनोधियोगोअग्राः" इत्यनुरूपः। स्तोत्रियानुरूपा

वृधर्चेशः । " इडेयावापञ्चविंशत्तृचं पच्छः । " उभाउनूनमि " त्येकादशर्चं पच्छः । " इन्द्राहोतारामथमापुरोहिते "-ति परिधानीया पच्छः । " पुरोमात्रये " ति याज्या । एतान्यतिरिक्तोक्थानि आग्नेयैन्द्रवैश्वदेववैष्णवानि चेत् एता एव याज्याः स्युः । सर्वाण्याश्विनानि चेत् तदा " युवंदेवाक्रतुनापूर्व्येणयुवांदेवास्त्रयएकादशासः पनाय्यन्तदश्विनाकृतंवांअयवांभागोनिहितोयजत्रे " ति चतस्रो याज्याः । एता वालखिल्या आम्नाताः । यद्येता ऋचो नाधीयात "पुराणमोकः सख्यंशिवंवामि " त्यिथाक्रमं चतस्रो याज्या भवन्ति । पर्यायवत्क्लृप्तः । यद्याप्तोर्यामसंस्थात्मको भवति छन्दोगानुसारेण तदाश्विनशस्त्रान्तमतिरात्रमविकृतं कृत्वा ऊर्ध्वमाश्विनादतिरिक्तोक्थानि भवन्ति इति विशेषः । यज्ञपुच्छादि सर्वमतिरात्रवत् । इति सप्तसंस्थाः ॥ तासां मध्ये यां संस्थामुपयन्ति तस्या अन्ते यज्ञपुच्छं कर्तव्यम् ॥

अथ यज्ञपुच्छप्रयोगः । शस्त्रसमाप्त्यनन्तरं मृगतीर्थसर्पणं कृत्वानूयाजादि शंयुवाकान्तं पशुवत्कुर्यात् । प्रैषसमाम्नाये यो द्वितीयः सूक्तवाकप्रैषस्तमत्र ब्रूयात् । तत्र यथादैवतं निगमनं भवति । सर्वत्र "अवीवृधतपुरोडाशैरि " त्येव ब्रूयात् पुरोडाशे सत्यसति च । " अवीवृधत " इत्यस्य नोहः । सूक्तवाके यथावाहितं देवता निगमयेत् । इन्द्रो वसुमानित्याद्याः सवनदेवताः । अत्राग्नूर्न भवति । सुब्रह्मण्यानुवर्तत एव । नामादेशश्च कर्तव्यः । शंयुवाकानन्तरं वाजिनयागश्चातुर्मास्यवत् । वाजिनयागोत्तरं हारियोजनः उन्नेतागो भवति । " अयाः सोममस्तमिन्द्रप्रयाहि" इत्यनुवाक्या । "धानासोमानामिन्द्राद्धिचापिबत्वे " ति प्रैषः । " युनज्मितेब्रह्मणाकेशिनाहरी " इति याज्या । उक्तोनुवषट्कारः । अथाहूतं द्रोणकलशमिडामिव प्रतिगृह्य उन्नेतुरुपहवमिष्ट्वा द्रोणकलशस्थं सोमं तूष्णीं

मवेक्ष्य " हरिवतस्तेहारियोजनस्ये " त्यादि " भक्षयामी " त्येतदन्तेन मन्त्रेण प्राणभक्षं भक्षयित्वा द्रोणकलशमुन्नेत्रे प्रदाय " अपाममोमं शन्नोभवे " ति मुखहृदये अभिमृशेत् । होता " उदायुपे " त्येतेनोपोत्थायोत्तरेण सर्वान्धिष्ण्यान्गत्वा पूर्वया द्वारा निष्क्रामति । एवमेव होत्रकाश्चाच्छावाकवर्जम् । अच्छावाकस्त्वपरया द्वारा निष्क्रामति । आग्नीध्रीयं प्राप्य प्रत्यगुदगित्यादिर्गिधना सर्वे आग्नीध्रीये विनिःसृप्ताहुतीर्जुह्वति होतृप्रथमग्रावस्तुदन्ताः " अयंपीतइन्दुरिन्द्रंमदेधा " इति द्वाभ्यां मन्त्राभ्याम । आद्यस्य सोमो देवता । द्वितीयस्याग्निः । अथ तस्मान्निष्क्रम्याहवनीयं पट् यूपकशलान्यभ्यादधाति । प्रत्यगुदगाहवनीयादवस्थाय " देवकृतस्यैनसोवयजनमसिस्वाहा पितृकृतस्यै० मनुष्यकृतस्यै० आत्मकृतस्यै० एनसएनसोवयजनमसि० यद्रोदेवाश्चकृमे " ति ऋक् । अथ द्रोणकलशाद्धाना गृहीत्वा आपूर्य " आस्थामापूरयते " त्यादि० " पशूंश्चे " त्यनेन मन्त्रेणावेक्ष्य तूष्णीमवघ्रायान्तःपरिधिदेशे निवपेयुः । अस्मिन्नेव मन्त्रे पूर्वभागेनावेक्ष्य उत्तरभागेनावजिघ्रेयुरिति वा । विनिःसृप्ताहुतीत्येतदन्तं सर्वे कुर्युः । तेषां मध्ये ये चमसिनस्ते सव्यावृतीभूत्वा तीर्थदेशे जलपूर्णाश्चमसा अध्वर्युभिः स्थापिताः तत्र व्रजेयुः । स्वस्वचमसात्पश्चादुपविश्य चमसदूर्वा निष्पीड्य चमसस्थाः आपो गृहीत्वा ताभिरद्भिः स्वं स्वमात्मानं दक्षिणैः पाणिभिरप्रदक्षिणन्त्रिः पर्युक्षन्त । प्रदक्षिणं वा सर्वैः पाणिभिः । "स्वधापित्रे स्वधापितामहाय स्वधाप्रपितामहाय " । एस्य पित्रादीनां मध्ये अन्यतमो जीवति तस्य तत्पर्युक्षणं नास्ति । पिण्डदानवत् । जुहुयाज्जीवेभ्य इत्युपायान्तराभावात् । अथ पाणींश्चमसेष्ववधायोद्यम्य " अप्सुधूतस्ये " त्यादिना० " भक्षयामी " त्यन्तेन मन्त्रेण प्रा-

णंभक्षान् भक्षयित्वा " महिम्नप्रजांपरामिचामि ' त्येतेनात्माभिमुखांश्चमसान्भूमौ निषिच्य निषिक्तमुदकम " अच्छायंवोमरुतश्श्लोकएत्वि-" त्येनयाभिमृशेयुः । ततः सयजमानाः सर्वे आग्नीध्रीयं गत्वा " दधिक्राव्णोअकारिषमि " त्येतयर्चा दधिद्रप्सं प्राश्याश्वस्य " उभाकर्णायुवाना " इति मन्त्रेण मरुयविनर्जनं कुर्युः । महस्तस्पर्शनेन पत्नीसंयाजेश्वरित्वा ततो होता प्रशास्त्रादिभिरन्वारब्धः सर्वप्रायश्चित्तानि जुहोति । न संस्थाजपः । अनुबन्ध्यायां अकरणपक्षे पशुकर्तृणां शूलाद्गमनकर्म भवति । तत्पशुतन्त्रे व्याख्यातम् । न संस्थाजपः । अथावभृथं व्रजन्ति ॥ व्रजन्तः सर्वे ऋत्विजः साम्नो निधनं ब्रूयुः । निधनमिति साम्नः पञ्चमी विभक्तिरुच्यते । अवभृथेष्ट्या तिष्ठन्तश्चरन्ति । सा चेष्टिः प्रयाजाद्यनुयाजान्ता । स्थानाचमने कृत्वा तीर्थेन प्रविश्य स्रुगादापनमुक्त्वा बर्हिर्वर्जं चतुरः प्रयाजान्यजति । उत्तमे प्रयाजे "स्वाहाग्निंस्वाहासोमंस्वाहावरुणंस्वाहादेवा " इत्यादि । "अप्स्वग्नेसधिष्टवाप्सुमेसोमोअब्रवीदि " त्यप्सुमतोराज्यभागयोरनुवाक्ये । नित्ये याज्ये । वरुणः प्रधानदेवता । " अवतेहेडउदुत्तममि " ति याज्यानुवाक्ये । अग्निवरुणौ स्विष्टकृद्देवते । " त्वन्नोअग्नेवरुणस्ये" ति पुरोनुवाक्या । "ये ३ यजामहेग्नीवरुणा मन्वन्नोवमोभवोती " ति निगदवर्जम । आवाहनाभावात । इडा च न भवति । अध्वर्युवशादनूयाजसद्भावे द्वावनूयाजौ यजति । संस्थितायां सर्वे-समत्नीयाः " नमोवरुणायाभिष्ठितोवरुणस्यपाशः " अनेन पादानुदकान्तेवदध्युः । ततो " भक्षस्यावभृथोमी " ति मन्त्रेण अपः पीत्वा प्रोथ्य प्रष्ठीवन्ति । प्रोथनं नामान्तरास्यशोधनार्थः क्रियाविशेषः । शौचार्थमाचमनं कृत्वा "भक्षितस्यावभृथोमी" ति पुनरापः पीत्वा प्रतिगरन्ति । शौचार्थमाचमनं कृत्वा "भक्षं कृत-

स्यान-पृथ्वीमी"ति पुनरापः पीत्वा प्रोथ्य प्रतिगरन्ति ॥ शौचार्थमाच-मनं कृत्वाप्लुत्य " आपोअस्मान्मातर " इत्येका " इदमापः प्र-वहत " त्येका "सुमित्र्यानआपओषधयः " एतैर्मन्त्रैरभ्युक्षेरन् । अथैतान्सर्वानुदकादुन्नेतोन्नयति । " उन्नेतरुन्नोनयोर्नतर्वस्वोअभ्यु-नपान" इत्युन्नीयमाना जपन्ति । " उद्वयन्तमसस्परी " त्युदेत्य आदित्यमुपतिष्ठन्त इति शेषः । अथाग्नेः " समिदसि " इत्यादि समिदाधानान्तं पशुवत्कुर्यात । ततो मैत्रावरुणाग्नीध्रवर्जाः सर्वे संस्थाजपं कुर्युः । अनुबन्ध्याया अकरणपक्षे मैत्रावरुणोऽपि संस्था-जपं कुर्वीत ॥ अथोदयनीयेष्टिः ॥ सा चं शाखामुखीये प्रायणीययोक्ता । विशेषस्तूच्यते । अग्निः सोमः सविता पथ्याः स्वस्तिरदितिरिति देवताक्रमः । यास्तत्रानुवाक्यास्ता अत्र याज्या । यास्तत्र याज्या-स्ताश्चाऽनुवाक्याः । स्विष्टकृति न विपर्यासः । इडा सूक्तवाकश्च प्रकृत्यां । मार्जनं भवति । अस्यामिष्टौ तन्त्रस्वरो भवति न प्राय-णीयास्वरः । ये प्रायणीयां कृतवन्तस्त एव ऋत्विजः कुर्युः । अन्यत्सर्वमस्य प्रायणीयावत् ॥ संस्थितायामुदयनीयायां मैत्राव-रुण्यनुबन्ध्यानामस्त्रीपशुर्गोजातिः । तस्याग्नीषोमीयवत्कर्तव्यः । वपायाः " आवांमित्रावरुणाहव्यजुष्टिमि"त्यनुवाक्या । " होता-यक्षन्मित्रावरुणावुस्राया वपायामेदसोजुषेतामि"ति प्रैषः । "युवंवस्त्रा-णि पीवसावसाथ" इति याज्या । अथ पुरोडाशस्य । " आवा-तंमित्रावरुणासुशस्तिरि"ति पुरोनुवाक्या । " हो० क्षन्मित्रावरु-णौपुरोडाशस्य जुषेतामि"ति प्रैषः । "प्रवाहवासिसृतञ्जीवसेन" इति याज्या । अथ हविषः । "आनोमित्रावरुणाहव्यजुष्टिमि"त्य-नुवाक्या । " हो० क्षन्मित्रावरुणावुस्रायाहविषआत्तामद्यमध्यतोमे-दउद्भृतं पुराद्वेषोभ्यः पुरापुरुषेभ्यायागृभः घस्तान्नूनंघासे अज्रा-णां० करन एवांमित्रावरुणौजुषेतां हविर्होतर्यजे"ति प्रैषः । यद्बंहिष्ठं-

देवताः सूर्यः, द्यौः, उषः, गौः, पृथिवी । "तरणिर्विश्वदर्शतश्चित्रं देवानामि"ति सूर्यस्य । "स्मत्पुरन्धिर्नआगही"ति द्वे दिवः । "आद्या तनोषिरश्मिभिरावहंतीपोष्यावर्याणी"त्युषसः । "नताअर्वारेणुककाटोअश्नुतेनतानशन्तिनदभाति तस्कर" इति गोः । "वडित्थापर्वतानांदन्हाचिद्यावनस्पतीनि"ति पृथिव्याः । अत्राप्यन्वायात्यत्वादुपांशुत्वमानात्र देवतादेशः । अनुबन्ध्यायां पशुलाभे मैत्रावरुणीया कर्तव्या । सा आज्यभागप्रभृति वाजिनान्ता भवति । तस्याः प्रयोगः । स्थानाचमने कृत्वा तीर्थेन प्रविश्य उत्तरवेदिसमीपे निरसनोपवेशने कृत्वा स्रुगादापनम् । वार्त्रघ्नावाज्यभागौ । प्रधानस्य "आनोमित्रावरुणायद्वंहिष्ठंनातिविधेसुदानू" इति याज्यानुवाक्ये । प्रकृत्या संयाज्ये । अनिगदे अनावाहन इति वचनात् । वाजिनयागस्तु चातुर्मास्येषु वैश्वदेव्यामुक्तः । कर्मिणो वाजिनं भक्षयेयुः । एषा आश्वलायनमतिः ॥ अथाध्वर्युप्रत्ययानुसारेण प्रधानयागप्रभृति इडान्ता भवति । अथ देविकाहवींष्यनुनिर्वपेयुः । तेषां देवतायाज्यानुवाक्याः पूर्वोक्ता द्रष्टव्याः । संस्थितायां सर्वप्रायश्चित्तानि हुत्वा संस्थाजपेनोपतिष्ठेत आग्नीध्रेऽपि संस्थाजपं करोति ॥ अथोदवसानीयेष्टिः ॥ तत्र पञ्चदश सामिधेन्यः । वार्त्रघ्नावाज्यभागौ । प्रधानस्याग्निर्देवता । "अयाह्यग्नेऽक्रनोअभ्रस्थ आभिष्टअग्रगीर्भिर्गृणन्त" इति याज्यानुवाक्ये । अथ स्विष्टकृतः । "एभिर्नोअर्कैरि" त्यनुवाक्या । "ये ३ यजामहेऽग्निस्विष्टकृतमयाडग्निरग्नेर्प्रियाधामानि ०सोमस्यप्रि०डग्नेः प्रियाधामान्ययाड्देवानामाज्यपानां० कृणोतुसो अध्वराजातवेदाजुषतांहविरग्नेतमद्याश्वंनस्तोमै० मातयोहैवौ ३षट्" । अन्यत्सर्वं पौर्णमासवत् । पौनराधेयिकी अविकृता इति वचनात् । पूर्णाहुतिपक्षे होतुर्न प्रयोगः ॥ इत्युदवसानीया समाप्ता ॥

इति श्रीवृद्धरत्नसूनर्थभट्टविरचितायामाश्वलायनश्रौतसूत्रप्रयोगदीपिकायां षष्ठोऽध्यायः ।
समाप्तोऽयं ग्रन्थः ।